श्रीः

वीरः सर्वसुरासुरेन्द्रमहितो वीरं बुधाः संश्रिताः ।
वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः ॥
वीरात् तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो ।
वीरे श्रीधृतिकीर्तिकान्तिनिचयः श्रीवीर ! भद्रं दिश ॥ १ ॥

# प्रास्ताविकं किंचित् ।

## १ प्रमाणमीमांसा

अयि श्रेष्ठा विद्वद्वरेण्या स्याद्वादजिज्ञासव । सोऽयं प्रकाश्यमानस्य 'आर्हतमतप्रभाकरस्य' प्रथमो मयूखः प्रमाणमीमांसा नाम । इयं प्रमाणमीमांसा न्यायशास्त्रगतसकलपदार्थविचारिणी पूर्वोक्तानेतत्कार्यकारिणो ग्रन्थानतिशेते स्वगुणमहिम्ना । अत्र पूर्वेषामक्षपादादीनां पदार्थविवेचनस्य विमर्शः संपादितो विद्वन्मनोह्लादिन्या सरण्या । इयं च कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यैर्विरचिता सूत्ररूपेण । विशेषतः सतोषावैतत् यत्प्रमाणमीमांसासूत्रवृत्तिः स्वयं तैरेवाचार्यपादैः प्राणायि । तेन स्याद्वाय वृत्तिधृतोऽर्थः सूत्रकृत्संमतो नवेति न कस्यचिदपि शङ्काकलङ्क । एवं सूत्रवृत्तिकर्तोरैक्यं न घटते कुत्रापि विरहय्य जैननियन्धान् । श्रीहेमचन्द्राचार्यैः प्रणीता येऽन्ये ग्रन्थास्तद्विषयेऽनुपदमेव वक्ष्यते । अत्र तु प्रमाणमीमांसाविषय एव विमृश्यते । अयं ग्रन्थः श्रीहेमचन्द्राचार्यैः पञ्चभिरध्यायैः संपूरितः " तत्र वर्णसमूहात्मकैः पदैः पदसमूहात्मकैः सूत्रैः सूत्रसमूहात्मकैः प्रकरणैः प्रकरणसमूहात्मकैराह्निकैराह्निकसमूहात्मकैः पञ्चभिरध्यायैः शास्त्रमेतदरचयदाचार्यः । ' ( पृ. २ ) इति स्वयमेव वृत्तावुक्तेर्ज्ञायते । किन्तु विपीदति चेतो निवेदयितुं यदधुना द्वितीयाध्यायप्रथमाह्निकसमाप्तिपर्यन्तमेव स उपलभ्यते । एतच्चाध्ययनाध्यापनाभावमूलं दुर्विलसितम् । एतादृशं ग्रन्थरत्नं न कदाचिदपि दृष्टिपथं यायात् । तथाप्याचार्यकृपया यदि तद्गतं किंचिदप्युपलभामहे तर्हि तत्प्रकाश्य विद्वज्जनेभ्य उपहारं करिष्येत साद-

रम्। उपलब्धे सूत्रवृत्त्यात्मके ग्रन्थे सूत्राणि शतसंख्याकानि। सूत्रसहितवृत्तिग्रंथसंख्या सार्धद्विसहस्रात्मिकेव दृश्यते। अस्याः प्रमाणमीमांसाया रचनाचार्यैः शब्दकाव्यच्छन्दोऽनुशासनानन्तरं कृता "आनन्तर्यार्थो वाथशब्दः शब्दकाव्यच्छन्दोऽनुशासनेभ्योऽनन्तरं प्रमाणं मीमांस्यत इत्यर्थः" (पृ ३) इति स्वयमाचार्योक्त्यैव प्रतीयते। एतद्गौतमसूत्रप्रथनानुकरणमिव प्रतिभाति यतस्तत्र पञ्चाध्यायास्तथात्रापि। आह्निकरचनापि तथैव। केवलरचनैवात्र गौतमस्यानुकृता विषयविमर्शस्तूभयोर्भिन्न। एतद्विषयवैलक्षण्यमग्रिमप्रघट्टके प्रदर्शयिष्यते। एवमेव पञ्चाध्यायी दिगाम्बराचार्य 'अमृतचन्द्र' विरचिता सापि न सपूर्णोपलभ्यते। सा च श्लोकरूपा न सूत्ररूपा। तत्र साम्प्रदायिकतत्त्वाना विमर्श उपलभ्यते। तस्या नाम 'पञ्चाध्यायी' इति।

एतस्या तु श्रीहेमचन्द्राचार्यकृतप्रमाणमीमांसाया प्रमाणप्रमेयादीना दार्शनिकपदार्थाना वर्ण्यमानत्वात् प्रमाणमीमांसेति नामान्वर्थकम्।

## २ न्यायसूत्रप्रमाणमीमांसयोर्वैलक्षण्यम्।

| प्रमाणमीमांसासूत्रम् | गौतमसूत्रम् |
|---|---|
| १ सम्यगर्थनिर्णय प्रमाणम्। १-१-२ | प्रमाणलक्षण गौतमसूत्रेषु नास्ति। |
| २ अनुभयत्रोभयकोटिसस्पर्शी प्रत्यय सशय। १-१ ५ | समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श सशय। १-१-२३ |
| ३ प्रमाण द्विधा। १-१-९<br>प्रत्यक्ष च परोक्ष च। १-१-१० | प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि। १-१-३ |
| ४ विशद प्रत्यक्षम्। १-१-१३ | इन्द्रियार्थसनिकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मक प्रत्यक्षम् १-१-४ |
| ५ स्पर्शरसगन्धरूपशब्दग्रहणलक्षणानि स्पर्शनरसनघ्राणचक्षु श्रोत्राणीन्द्रियाणि द्रव्यभावभेदानि। १-१-२२ | घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य १-१-१२ |

रम् । उपलब्धे सूत्रवृत्त्यात्मके ग्रन्थे सूत्राणि शतसंख्याकानि । सूत्रसहितवृत्तिग्रंथसंख्या सार्धद्विसहस्रात्मिकेव दृश्यते । अस्याः प्रमाणमीमांसाया रचनाचार्यैः शब्दकाव्यच्छन्दोऽनुशासनानन्तरं कृता " आनन्तर्यार्थो वाथशब्दः शब्दकाव्यच्छन्दोऽनुशासनेभ्योऽनन्तरं प्रमाणं मीमांस्यत इत्यर्थः" (पृ. ३) इति स्वयमाचार्योक्त्यैव प्रतीयते । एतद्गौतमसूत्रप्रथमानुकरणमिव प्रतिभाति यतस्तत्र पञ्चाध्यायास्तथात्रापि । आह्निकरचनापि तथैव। केवलरचनैवात्र गौतमस्यानुकृता विषयविमर्शस्तूभयोर्भिन्नः । एतद्विषयवैलक्षण्यमग्रिमप्रघट्टके प्रदर्शयिष्यते । एवमेव पञ्चाध्यायी दिगम्बराचार्य ' अमृतचन्द्र ' विरचिता सापि न संपूर्णोपलभ्यते । सा च श्लोकरूपा न सूत्ररूपा । तत्र सांप्रदायिकतत्त्वानां विमर्श उपलभ्यते । तस्या नाम ' पञ्चाध्यायी ' इति ।

एतस्यां तु श्रीहेमचन्द्राचार्यकृतप्रमाणमीमांसायां प्रमाणप्रमेयादीनां दार्शनिकपदार्थानां वर्ण्यमानत्वात् प्रमाणमीमांसेति नामान्वर्थकम् ।

## २ न्यायसूत्रप्रमाणमीमांसयोर्वैलक्षण्यम् ।

| प्रमाणमीमांसासूत्रम् | गौतमसूत्रम् |
|---|---|
| १ सम्यगर्थनिर्णयः प्रमाणम् । १-१-२ | प्रमाणलक्षणं गौतमसूत्रेषु नास्ति। |
| २ अनुभयत्रोभयकोटिसंस्पर्शी प्रत्ययः संशयः । १-१-५ | समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः । १-१-२३ |
| ३ प्रमाणं द्विधा । १-१-९<br>प्रत्यक्षं च परोक्षं च । १-१-१० | प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। १-१-३ |
| ४ विशदः प्रत्यक्षम् । १-१-१३ | इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम् १-१-४ |
| ५ स्पर्शरसगन्धरूपशब्दग्रहणलक्षणानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि द्रव्यभावभेदानि । १-१-२२ | घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः १-१-१२ |

| प्रमाणमीमांसासूत्रम् | गौतमसूत्रम् |
|---|---|
| ६ सर्वार्थग्रहण मन । | युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् । १-१-१६ |
| ७ वासनोद्बोधहेतुका तदित्याकारा स्मृति । १-२-३ | प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्य । ३-२-४२ |
| ८ उपलम्भानुपलम्भनिमित्त व्याप्तिज्ञानमूह । १-२-५ | अस 'ऊह' लक्षण नास्ति किंतु सर्वलक्षणम्—अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क । १-१-४० |
| ९ साधनात्साध्यविज्ञानमनुमानम् । १-२-७ | अथ तत्पूर्वक[1] त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्ट च । १-१-५ |
| १० स[1] व्याप्तिदर्शनभूमि । १-२-२० | लौकिकपरीक्षकाणा यस्मिन्नर्थे बुद्धिसाम्य स दृष्टान्त । १-१-२५ |
| ११ बोध्यानुरोधात्प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चापि । २-१-१० | प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा । १-१-३२ |
| १२ साध्यनिर्देश प्रतिज्ञा । २-१-११ | साध्यनिर्देश प्रतिज्ञा । १-१-३३ |
| १३ साधनत्वाभिव्यञ्जकविभक्त्यन्त साधनवचन हेतु । २-१-१२ | उदाहरणसाधर्म्यात्साध्यसाधन हेतु १-१-३४ तथा वैधर्म्यात् । १-१-३५ |
| १४ दृष्टान्तवचनमुदाहरणम् । २-१-१३ | साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् । १-१-३६ |
| १५ धर्मिणि साधनस्योपसहार उपनय । २-१-१४ | उदाहरणापेक्षस्तथेत्युपसहारो न तथेति वा साधनस्योपनय । १-१-३८ |

१ स — दृष्टान्त ।

१ तत्पूर्वकं—प्रत्यक्षपूर्वकम् ।






| प्रमाणमीमांसासूत्रम् | गोतमसूत्रम् |
|---|---|
| १६ [illegible] निगमनम । ७-१-१५ | हेत्वपदेशात्प्रतिज्ञाया पुनर्वचनं निगमनम् । १-१-३९ |
| १७ असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासा । २-१-१६ | सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासा । १-२-४ |
| १८ तत्त्वसरक्षणार्थं प्राश्निकादिसमक्ष साधनदूषणवदन वाद । २-१-३० | प्रमाणतर्कसाधनोपालम्भ सिद्धान्तविरुद्ध पञ्चावयवोपपन्न पक्षप्रतिपक्षपरिग्रहो वाद । १-२-१ |

सुप्रतीतमेव स्यात्प्रज्ञाना विमर्शशालिना यदत्र श्रीहेमचन्द्राचार्यसूत्रेषु गोतमसूत्रेषु च समानशब्दव्याहारेण यत्सूत्रित तस्यैवैतद्वैलक्षण्य तत्रापि सूत्रकृतोरुभयोरल्पीयसाशेन प्रतीतिभेद । यथा वादलक्षणे है सू २-१-३० गौ सू १-२-५ गौ सू १-१-४० । दुर्दैवविलगौ सू १-१-२ तर्कलक्षणे है सू सितेनाधुनास्माभि श्रीहेमचन्द्राचार्याणा निखिला पञ्चाध्यायी नोपलभ्यते किन्तु शतसूत्रात्मकस्तस्या अध्यर्ध्योऽध्याय । तत्र श्रीहेमचन्द्राचार्यैर्गृहीता गोतमसूत्रेष्वगृहीता विषया बहव सन्ति ते च दर्शयितु शक्यन्ते यतो गोतमसूत्राणि सर्वाणि समुपलभ्यन्त एव मुद्रितान्यपि । तथाहि-हैमसूत्रधृता प्रमाण, अनध्यवसाय, विपर्यय, वस्तु, प्रत्यभिज्ञान, व्याप्ति, पक्ष, दृष्टान्ताभास, दूषण, जय, पराजयलक्षणादिविषया गोतमसूत्रेषु नोपलभ्यन्ते । अवग्रहेहावायधारणावधिमन पर्यायज्ञानद्रव्येन्द्रियादयो विषया गौतमसूत्रेषु न लक्षिता इत्यन्यदेतत् । यतो नैते विषया समयान्तरे परिगृहीतास्तथैव गोतमसमयेऽपि । हेत्वाभासविषये महदेव वैलक्षण्य गोतममते पञ्च हेत्वाभासा श्रीहेमचन्द्रशास्त्रे ते त्रय । त्रिष्वेव पञ्चानामन्तर्भाव स्वयमेव 'विशेष्यासिद्धादीनामेष्वेवान्तर्भावः' ७-१-१९ इति सूत्रकृद्भि प्रदर्शित ।

## ३ श्रीहेमचन्द्राचार्यचरितम् ।

अस्ति गुर्जरेषु धुन्धुकसंज्ञो ग्रामः । तत्र मोढवंशावतंसः ' चाच '-संज्ञक. श्रेष्ठी निवसति स्म । तस्य भार्या 'पाहिनी' नाम । सा च कदाचित उपलब्धं चिन्तामणिरत्नं गुरवेऽहमदामिति स्वप्नेऽद्राक्षीत् । तदानीं दैवादायातान् श्रीप्रद्युम्नसूरिशिष्यान् श्रीदेवचन्द्रसूरीन्सा पाहिनी स्वस्वप्नमकथत् । तदा तैस्तस्य स्वप्नेनानेन संसूचितोऽयमर्थ इत्यकथ्य । तथा च प्रभावकचरिते हेमचन्द्रसूरिप्रबन्धे—

जैनशासनपाथोधिकौस्तुभः संभवी सुतः ।
तव स्तवकृतो यस्य देवा अपि सुवृत्ततः ॥ १६ ॥

तदनुसारं पाहिनीकुक्षे वैक्रमे ११४५ इ. स. १०८८ संवत्सरे कार्तिकशुक्लपूर्णिमायां भानुजयासरे पुत्ररत्नमजीजनत् । तस्य पितृकृतं व्यावहारिकं नाम 'चांगदेव' इत्यासीत् । शिशुरपि स महामतिः पञ्चमे वर्षे गुरुणा मातृसकाशात्प्रार्थितः । तथा च पत्यौ प्रोषितेऽपि स्वप्नसंस्मृतेः पञ्चवर्षीयश्चांगदेवो गुरुभ्यः चान्द्रगच्छीयदेवचन्द्रसूरिभ्यः समर्प्यत । स च

---

१ तस्या नाम ' चन्द्री ' इति वीरवशावली ( साहित्यसंशोधकत्रैमासिकम् । ख. १ अ. ३ पृना )

२ ( १ ) जैन इतिहासे भा. १ हिरालालहसराजसकल्पिते पृ. ५१ एते प्रद्युम्नसूरयो न देवचन्द्रगुरवः किंतु भिन्नाः । ते मानदेवसूरिपूर्णचन्द्रसूरिगुरव आसन् । तेषां विद्यमानताकालः विक्रमसवत् १२९२ । ये श्रीहेमचन्द्रसूरिगुरवो देवचन्द्रसूरयस्ते भिन्नास्तै· शान्तिनाथचरितम् २ स्थानाङ्गवृत्तिरिति ग्रन्थद्वय कृतम् । वीरवंशावल्यामपि ( पृ २१६ ) इत्यत्र प्रद्युम्नसूरिशिष्या मानदेवसूरय इत्युक्तम् ।

( २ ) श्रीहेमचन्द्रः प्रद्युम्नसूरिसतीर्थ्य ( गुरुबन्धु ) इति डॉ. सतीशचन्द्रकृत ( दि हिस्टरि ऑफ इण्डियन लॉजिक् ) ग्रन्थे पृ. १०५ इत्यत्र मुद्रित, ३ टिप्पन्या श्लोकश्च दत्त'—श्रीमाश्चन्द्रकुलेऽभवद्गुणनिधिः प्रद्युम्नसूरिप्रभुर्बन्धुर्यस्य स सिद्धहेमविधये श्रीहेमसूरिर्विधिः । उत्पादासिद्धिप्रकरणटीकाया चन्द्रसेनकृतायाम् ।

३ स्वसप्रदायेऽधुना पुर्वाचार्यवत् शासनोन्नतिकारको न कोऽपि पुरुषोऽस्तीति दूयमानचेतोभि· ' श्रीपूर्णतल्लाख्यगच्छीयश्रीदेवचन्द्रसूरिभिः समाराधिता देवा एव तेभ्यो वरमदुः । यूय धुधुकग्राम गत्वा ' पाहिनी ' सुनु चागदेवाख्य याचत स च स प्रति सप्रभावको भविष्यति तदनुसार तैर्गत्वा याचित स सुत ' । कुमारपालचरिते चारित्रसुन्दरगणिकृते प्रथमसर्गे तृतीयवर्गे ।

चांगदेवस्तैः स्तम्भनपुरं नीत्वा दीक्षया संस्कृतः विक्रमसंवत्सरे ११५० मिते माघशुक्लचतुर्दश्यां रविसुतवारे। दीक्षितस्य तस्य सोमचन्द्रेत्यभिधानं बभूव। ततः श्रीरैवतावतारे श्रीनेमितीर्थे जाग्रतो नासाग्रन्यस्तचक्षुषः सोमचन्द्रस्य समाराधनात् देवी शारदा तुष्टा तवेहितं सेत्स्यतीति तस्मै वरमदात्। तेन वरेण सिद्धं तं सोमचन्द्रं शुभे मुहूर्ते विक्रमसंवत्सरे ११६६ मिते (१२०९) वैशाखे प्रभावकधुराधुर्यं सूरिपदे स्थापयामासुः श्रीगुरवः। तदा तस्य ' हेमचन्द्र ' इति संज्ञा व्यधायि।

अथ च श्रीहेमचन्द्राचार्यैर्विविधास्तत्तच्छास्त्रव्युत्पादका ग्रन्था निरमीयन्त यन्नामनिर्देशोऽनुपदमेव करिष्यते। तत्रान्यतमोऽयं प्रमाणमीमांसाख्यो निरुपमो न्यायग्रन्थः। जैनश्वेताम्बरसंप्रदायानुयायिनां सन्त्यन्येऽपि न्यायग्रन्थाः। तथाहि-१ श्रीसिद्धसेनदिवाकराणां वैक्रमप्रथमशताब्द्यां वर्तमानानां संमतितर्कन्यायावतारादयः। २ श्रीहरिभद्रसूरिणां वैक्रमषष्ठाब्द्यां वर्तमानानां अष्टकानि षड्दर्शनसमुच्चय, अनेकान्तजयपताकादयः। ३ श्रीदेवसूरिणां वादिदेवसूरीति नाम्ना विख्यातानां वैक्रमद्वादशशताब्द्यां वर्तमानानां प्रमाणनयतत्त्वालोकालङ्कारः स्वोपज्ञस्याद्वादरत्नाकराख्यबृहट्टीकासहितः। ततः ४ श्रीहेमचन्द्रसमयो वैक्रमद्वादशाब्दी। एतेषां वादिदेवसूरीणां च समानकालभवत्वं यतो वादिदेवसूरिभि. सह सिद्धराजसभायां। श्रीहेमचन्द्रसूरय आसन दिगम्बराचार्यकुमुन्द्रचन्द्रशास्त्रार्थसमये। ५ ततः परं वाचकयशोविजयसूरीणां वैक्रमषोडशशताब्द्यां वर्तमानानां द्वात्रिंशिकादयो ग्रन्थाः। यद्यप्येतत्कृता द्वात्रिंशिकाः स्वतन्त्र-

१ पूर्वं गुरुश्चतुर्दशे वर्षे ११५९ मिते, ११६४ मिते वा सोमचन्द्रं पदाधिकारिणमकारयत्। ततो गुरुनिदेशेन कश्मीरान् शारदाराधनबुध्या गतवतस्तृतीये प्रयाणके शून्ये कस्मिंश्चिद् देवालये निशीथे शारदामन्त्रं हृदि ध्यायतस्तस्य पुरस्ताच्छारदा प्रादुर्भूय वरमदात् तिरोभूता च। तथाहि—नानाविज्ञानरूपः शुचिरुचिरवचोरञ्जितानेकभूपः सद्विद्यायशयूपो भवभवभयभित्पुण्यपानीयकूपः। आजन्मब्रह्मलीलाकलितवरतनो! सस्मृता त्वत्समपिमैष्यामीत्युदित्वा सपदि भगवती भारती सा तिरोऽभूत् ॥२१॥ घा. कृत कुमारपालचरिते प्रथमसर्गे चतुर्थवर्गे।

ग्रन्थास्तथापि ते श्रीहरिभद्रसूरिग्रन्थानां विस्तृतविशदव्याख्यानरूपा इव भान्ति। सोऽयं सामयिकः क्रमो न्यायशास्त्रग्रन्थकृतां जैनश्वेताम्बराचार्याणाम्। तत्र श्रीहेमचन्द्राचार्यकृतानां सार्धंतिस्रः कोटयो ग्रन्थानामिति प्रामाणिकैतिहासिकैरन्यत्र तत्र निर्दिष्टम्। प्रकृते च प्रमाणमीमांसाग्रन्थे पर्यालोच्यमाने सुप्रतीतं भवति विदुषां यदेतद्ग्रन्थप्रणयनसमये श्रीहेमचन्द्राचार्या गौतमबौद्धजैनाचार्यकृतिषु न्यायविषयिणीषु दत्तदृष्टय आसन्निति। आचार्यैरेतैर्व्याकरणादिग्रन्थेष्विवात्रापि प्रमाणमीमांसाग्रन्थे स्वासाधारण्यं विषयप्रतिपादनादिविषये प्रादर्शि। सर्वेष्वधीतेषु श्रीहेमचन्द्राचार्यग्रन्थेषु सर्वविषयनदीष्णः स्यात् कोऽपि न तेन सम्प्रदायान्तरस्थो ग्रन्थोऽध्येय इति यदहं नातिशयोक्तिभाजनमात्मानं करोमीति दृढं प्रत्येमि यत आचार्याणामेतेषां वाङ्मयस्य सर्वासु शाखासु सिद्धान्तग्रन्था दृश्यन्ते तथाहि– व्याकरणे हैमशब्दानुशासनं पञ्चाङ्गम्। साहित्ये काव्यानुशासनम्, काव्येषु द्व्याश्रयकाव्यम्। छन्दःसु छन्दोऽनुशासनम्। योगेषु योगशास्त्रम्। अध्यात्मविषये, अयोगान्ययोगव्यवच्छेदद्वात्रिंशिके। नीतिषु–अर्हन्नीतिः। चरित्रेषु, त्रिषष्टिशलाकापुरुषचरित्रम्। कोशेषु– अभिधानचिन्तामण्यादयः। न्यायग्रन्थेषु–प्रमाणमीमांसा। एवमेव सर्वत्र। किं चापरमिदं वैशिष्ट्यमेतेषां यत्र व्याख्यानापेक्षा तत्र तैः स्वोपज्ञवृत्तिरेव व्यरचि। तेन न सम्प्रदायान्तरवत् एतद्ग्रन्थेष्वभिप्रायभेदः सम्भवति। यदद्य पण्डितैर्जैनग्रन्थानामैश्वर्यमुररीक्रियते तदेतदाचार्यकृतग्रन्थमूलमेव। नो चेदाचार्या प्राणेष्यन् ग्रन्थजातं तर्हि जैनवाङ्मयमपूरितमिवाभविष्यत्। एताः सर्वा ग्रन्थकृतयः श्रीसिद्धराजकुमारपालससूचनयैव समभूवन्। तथाहि सिद्धराजससूचनया संस्कृतप्राकृतापभ्रंशव्याकरणानि। कुमारपालससूचनया योगशास्त्रत्रिषष्टिपुरुषचरित्रादिकम्। तथाच–" ततः समभ्यर्थ्य स हेमचन्द्रसूरीन् श्रुतेशावरराजमानान्। श्रीसिद्धहेमाभिधशब्दशास्त्रम् चीकरत्सिद्धनृपः स्वकीर्त्यै॥२९॥" कुमारपालचरिते प्रथमसर्गे चतुर्थवर्गे।

" भूपालोऽथावदत् किं नास्मत्कोशे शास्त्रपद्धतिः। विद्वान्

कोऽपि कथं नास्ति देशे विश्वेऽपि गूर्जरे ॥७९॥ सर्वे संभूय विद्वांसो हेमचन्द्रं व्यलोकयन् ॥ ८० ॥ श्रीहेमसूरयोऽप्यत्रालोक्य व्याकरणव्रजम् । शास्त्रं चक्रुर्नवं श्रीमत्सिद्धहेमाख्यमद्भुतम् ॥९६॥" इति प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे—

" श्रीयोगशास्त्रप्रमुखान् प्रबन्धान् त्रिषष्टिपुंसां चरितानि चायम् । प्रभोर्मुखाब्जिस्खलचित्तवृत्तिः शुश्राव सुश्रावकचक्रचक्री ॥ २० ॥"
कुमारपालचरिते चतुर्थसर्गे चतुर्थवर्गे ।

एवं ग्रन्थान् निर्माय तत्र तत्र शास्त्रार्थचर्चया कुमारपालादिप्रतिबोधनेन कालं समर्थयतां श्रीहेमचन्द्राचार्याणां पञ्चाशद्वर्षाणि व्यतीयुः । अन्तरान्तरा तेषां वादोऽप्यभूत् । तथाच कुमारपालचरिते पञ्चमसर्गे प्रथमवर्गे—" काशीनिवासी स्वकलाकलापदासीकृताशेषजनः मकाशी । तदेवबोधः कृतवादिरोधः शुश्राव नामान्यकृतावबोधम् ॥ ४ ॥ श्रीहेमचन्द्रेण समं विवादं कर्तुं समागात् समदेन तत्र । अहो ! सहन्ते नहि मानवन्तस्तेजः परेषामधिकं सपर्याः ॥५॥ " एवं परानुग्रहबुद्ध्या कालं नयन्तोऽगाधमेधश्रीहेमचन्द्राचार्याः कलिकालसर्वज्ञेति बिरुदावलिं भूषयन्तः स्वर्गमलंचक्रुर्वैक्रमसंवति १२२९ मिते वर्षे । तथाच प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे—

" नन्दद्वयरवौ वर्षेऽवसानमभवत्प्रभोः ॥ ८४९ "

*तत्रैव तद्वर्णनम् ।*

"इत्थं श्रीजिनशासनाभ्रतरणेः श्रीहेमचन्द्रप्रभो-
रज्ञानान्धतमःप्रवाहहरणं मात्रादृशाम् मादृशाम् ।
विद्यापङ्कजिनीविकाशविदितं राज्ञोऽतिवृध्यै स्फुरत्-
वृत्तं विश्वविबोधनाय भवताद् दुःकर्मभेदाय च ॥८५०॥"

## ४ श्रीहेमचन्द्राचार्यरचितग्रन्थानां नामानि ।

१ सिद्धहेमशब्दानुशासनम्—(सूत्राणि, लघुबृहद्वृत्तिद्वयं, बृहद्वृत्तौ २ गणपाठ, सवृत्ति ३ धातुपाठ ( धातुपारायणम् ) सवृत्तीनि ४ उणादि सूत्राणि, बृहट्टीकायुतं ५ लिङ्गानुशासनम् । ) स्वोपज्ञबृहद्वृत्तौ न्यास. ( ८४००० ) ग्रन्थसङ्ख्यात्मक ।

२ काव्यानुशासनम् ( सवृत्ति )।
३ छन्दोऽनुशासनम् ( सवृत्ति )।
४ अयोगव्यवच्छेदद्वात्रिंशिका।
५ अन्ययोगव्यवच्छेदद्वात्रिंशिका।
६ अर्हन्नीति ।
७ अभिधानचिन्तामणि सवृत्तिक ( अयमेव नाममालेत्यप्यभिधीयते डॉ सतीशचन्द्रेण )
८ अनेकार्थसंग्रह सवृत्ति ( पिटर्सनमहाशय वृत्तिर्महेन्द्रकृता न हेमचन्द्रकृतेति वदन चिन्त्य । पिटर्सन्स रिपोर्ट पृ ५१ ) जैनग्रन्थावलि पृ ३०९ इत्यत्र अनेकार्थनाममालेति नाम यदुच्यते तदेतस्यैव स्यात्।
९ निघण्टु सशेष ।
१० देशीनाममाला ( सवृत्ति )
११ योगशास्त्रम् ( सवृत्ति )
१२ त्रिषष्टिशलाकापुरुषचरित्रम् ।
१३ परिशिष्टपर्व
१४ द्व्याश्रयमहाकाव्य संस्कृत प्राकृत च ।
१५ वीतरागस्तोत्राणि विंशतिसंख्यानि ( तथा च प्रभावकचरिते– " चक्रे विंशतिमुख्यै स वीतरागस्तवाना च ॥ ८३५ ॥ " )
१६ न्यायबलाबलसूत्राणि । ( अत्र प हिरालालहंसराजकृतजैनेतिहासे ( १–१४९ ) बलाबलसूत्रबृहद्वृत्तिरित्युक्तम )
१७ सप्तसंधानमहाकाव्यम् ।
१८ नाममालाशेष ( निर्णयसागरमुद्रितकाव्यानुशासनप्रस्तावनायामेव निर्देश )
१९ बालभाषाव्याकरणसूत्रवृत्ति । ( प हिरालालमतेन )
२० विभ्रमसूत्रम् । ( प हिरालालमतेन । प बेचरदासमहाशयस्तु ग्रन्थोऽयं गुणचन्द्रस्येति लिखति पुरातत्त्व पु ४ अ १ पृ ८१ )

२१ शेषसंग्रह
२२ शेषसंग्रहसारोद्धार } काव्यानुशासनप्रस्तावनानुसारम्

२३ द्वात्रिंशत् द्वात्रिंशिका –जैनग्रन्थावल्यनुसारम् पृ १८० इद लिखितपुस्तक राजनगर ( अहमदाबाद ) डेहलाभाण्डागारेऽस्तीति तत्रैव निर्दिष्टम् ।

२४ नाभेयनेमिद्विसधानकाव्यम् । जैनग्रन्थावल्यनुसारम् । तथा मुनिजिनविजयमहाशया । प हिरालालमतेनाय ग्रन्थ द्रोणाचार्यशिष्यसुराचार्यकृत ( जै इ १।१३६ )

२५ द्विजवदनचपेटा—अयमेव ग्रन्थो वेदाङ्कुश इत्यप्यभिधीयत इति प हरगोविन्ददासमतम् । श्रीहरिभद्रसूरिकृतोऽपि द्विजवदनचपेटेति ग्रन्थो वर्तते ।

२६ चन्द्रलेखविजयप्रकरणम् । जैनग्रन्थावली पृ ३२९एतदनुसारम् ।

अयि श्रेष्ठा विद्वास । आर्हतमतप्रभाकरपरिचये प्रतिश्रुतानुसार प्रथमोऽय किरण प्रमाणमीमासाख्य प्रकाश्य श्रीमत्पुरतो निधीयते । एतत्प्रकाशने पुस्तकद्वय लब्धम् ।

१ प्राच्यविद्यासशोधनमन्दिरम् (भाण्डारकर आरिएटल रीसर्च इ ) प्राचीन लिखित च । अतीवाशुद्धमपूर्णं च ।

२ श्रेष्ठि माणिकलालमनसुखभाईमुद्रापितम् अधुना दुर्लभमपि मुनि जिनविजयजीकृपाप्रसादाल्लब्धम् ।

पुस्तकद्वयेनाप्युपकृता वय तत्तन्महाशयानुग्रहभरान्वहाम । एव पुस्तकद्वयानुसार विलिख्य शुद्ध पुस्तकमर्थभेदविधायिपाठान्तराणि सगृहीतानि टिप्पनीरूपेण । तथैव टिप्पन्या १ दुर्गमशब्दार्थ २ पौराणिकदृष्टान्ता ३ लौकिकन्यायाश्च तथा विशदीकृता यथा ग्रन्थार्थजिज्ञासूनां सौकर्यं स्यात् । किं च प्रमाणार्थं ग्रन्थकृदादृतानि वचासि तत्तद्ग्रन्थस्थलनिर्देशपूर्वकमधो निर्दिष्टानि स्थूलाक्षरैश्च मुद्रितानि येन प्रकरणाविज्ञान सुलभ भवेत् जिज्ञासूनाम् । प्रयतमानैरप्यस्माभि कानिचिद्वचनस्थलानि नोपालभ्यन्त तानि तथैव स्थूलाक्षरैर्निर्दिष्टानि । यैर्महाशयैरुपलभ्येत पूर्वोक्तवचनस्थलादिक तैरनुग्रहबुध्या प्रेष्यते चेन् लिखित्वास्मत्सविधे तर्हि पुनर्मुद्रणावसरे तदुपयोगेनात्मन कृतकृत्यता सपाद्येत । कानिचिद्वाक्यानि नोपलभ्यन्ते यथायथ किं तु तदर्थसमानि ग्रन्थेषु केषुचित लभ्यन्ते तद्ग्रन्थनामानि स्थलनिर्देशपूर्वक टिप्पन्या दर्शितानि । दृढ विश्वसिमो यद् ग्रन्थकृदादृतानुपूर्वीघटितानि भवेयुरेव कुत्रचित् इमानि वाक्यानि तान्यपि यदि कैश्चित्कृपया प्रेष्यन्ते तर्हि पुनर्मुद्रणावसरे मुद्रापयिष्येरन् । एव त्रिविधमपि स्थूलाक्षरमुद्रित, उपलब्धानुपलब्धोपलब्धसमवाक्यजात परिशिष्टे दर्शनसौकर्याय मुद्रापितम् । प्रास्ताविके

१ प्रमाणमीमासाग्रन्थधृतविषय २ न्यायसूत्रप्रमाणमीमासयोर्वैलक्षण्यम् ३ श्रीहेमचन्द्राचार्यचरितम् ४ श्रीहेमचन्द्राचार्यरचितग्रन्थानां नामानि । इति चतुष्टय यथामति सविस्तर निरूपितम् । श्रीहेमचन्द्राचार्यणा यद्यप्यत्र महतायासेन साधनानि समुच्चित्य ससाधिनस्तथापि केषाचिदाचार्यमहाभागाना मसूचनया न मुद्रापित । अन्तिममरुन्तुद कृत्य निवेदयामो यत् मुद्रापितग्रन्थे सभूता अशुद्धय । तत्र कारण मानुषतामुलभमज्ञानमिति तु नातिरोहितम् । तथापि कानिचिदासीत्त्वरा । तथाहि—अस्माभिरारब्धमात्रे मुद्रापणे श्रुतिपथमागत यत् ‘ जैनश्वेताम्बरपरिषदोऽधिवेशनम्’ पक्षाभ्यन्तर एव मोहमय्या भवितेति तत्रासीनमनसि यदेकसमयावच्छेदेन सर्वेभ्यो नानादिग्देशागतेभ्य पण्डितेभ्यो जैनग्रन्थप्रसारधुरन्धरेभ्यो महाशयेभ्यश्च दर्शनीय मुद्रितप्रमाणमीमासापुस्तक भवतु च परिचय कार्यद्वारा ‘ आर्हतमतप्रभाकरस्य ’ इति निश्चित्य प्रत्यह षोडशपत्राणि मुद्रापितानि। तेन मुद्राप्यमाणपत्रावलोकनावसरादशुद्धय प्रतिपृष्ठ पदमकार्षु । सन्तुष्यते चेतो निवेदयितु पुस्तकमेतन्मुद्रापित दृष्ट्वा बहुभि प्रतीमहाशयैश्च सभ्यै प्रोत्साहितोऽह आर्हतमतप्रभाकरस्य कर्मणि । तत सभाया निवर्त्य शुद्ध्यशुद्धिपत्र निर्मित तदग्रन्थे परिशिष्टरूपेण मुद्रापितम् । तदनुसार सपाद्य पुस्तकशुद्धि पठेयु पाठकश्रेष्ठा इति विज्ञापयाम ।

प्रमोदावह स्वकर्तव्य निवेद्यते यदन्तरा समापयितु न पारयामि प्रास्ताविक तदेतन्मान्याना च व्याकरणाचार्यवेदान्तवागीशपाठकोपाह्व-श्रीधरशास्त्रिणामनुग्रहभरनिर्देशो नाम । महाभागे सहृदयैरेभि कार्यकालव्ययमविगणय्य शास्त्रीयग्रन्थधुरन्धरादरेणोपकृतोऽह सर्वथा प्रकाशनेऽस्य ग्रन्थस्य । यदि न स्यात् साहाय्यमेतेषा तर्हि प्रकाशनकार्य विशदार्थकारिटिप्पनीयुत प्रास्ताविक च सर्वाङ्गीण नैव मया प्रकाशयितु शक्येतेति निर्दिशन्नहमल्पाशेनापि आत्मानमत्युकिभाजन करोमि । किंच ‘ दत्तराम रंगनाथ उपासक’ ( कार्याधिपो जैन प्रिंटिंग वर्क्स ) एतेषा महाशयानामनुग्रहभरोद्वहन स्वकर्तव्य मन्ये यदल्पीयसा कालेन स्वीयकार्यकर्तृभि सहैतै सोढ्वायासभरानहोरात्र सपादित मुद्रण पुस्तकस्यास्य । यदि न स्यादीदृश साहाय्य तर्हि पुस्तकमिद [illegible] नोपस्थित भवेत् । अत पर २ [illegible] मानात्त्रुटीर्विज्ञाप्यानुमाह्योऽय

सावत्सरीकपर्व वीरसवत् २४५२ }
पुण्यपत्तनम् }

विद्वद्वशवद ,
मोतीलाल लाधाजी

# अकारादिक्रमेण प्रमाणमीमांसासूत्राणां सूचिपत्रम्।

# निर्दिष्टस्थलानि प्रमाणवचनानि

## अनुपलब्धस्थलानि प्रमाणवचनानि

## उपलब्धवाक्यसमानि प्रमाणवचनानि



---

वैक्रम १२९४ मिते संवत्सरे तालपत्रोपरि चित्रितमूर्तिप्रतिकृतिः ।



कलिकालसर्वज्ञो भगवान्
श्रीहेमचन्द्रसूरीश्वरः ।

परमार्हत–
श्रीकुमारपालभूपालः ।

इत्थं श्रीजिनशासनाभ्रतरणेः श्रीहेमचन्द्रप्रभो–
रज्ञानान्धतमःप्रवाहहरणं मात्रादृशां मादृशाम् ।
विद्यापङ्कजिनीविकाशविदितं राज्ञोऽतिवृद्ध्यै स्फुरत्–
वृत्तं विश्वविबोधनाय भवताद् दुःकर्मभेदाय च ॥१८५॥

–प्रभावकचरिते श्रीहेमचन्द्रसूरिप्रबन्धे ।

ॐ नम सर्वज्ञाय

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिता
स्वोपज्ञवृत्तिसहिता

# प्रमाणमीमांसा

अनन्तदर्शनज्ञानवीर्यानन्दमयात्मने ।
नमोऽर्हते कृपाक्लृप्तधर्मतीर्थाय तायिने ॥ १ ॥
बोधबीजमुपस्कर्तुं तत्त्वाभ्यासेन धीमताम् ।
जैनसिद्धान्तसूत्राणां स्वेषां वृत्तिर्विधीयते ॥ २ ॥

ननु यदि भवदीयानीमानि जैनसिद्धान्तसूत्राणि तर्हि भवतः पूर्वं कानि किमीयानि वा तान्यासन्निति । अत्यल्पमिदमन्वयुङ्क्थाः । पाणिनिपिङ्गलकणादाक्षपादादिभ्योऽपि पूर्वं कानि किमी-

* तायुङ् सतानपालनयोरिति ( हे धा पा १–८०६ ) धातो रूपम् । पाल्कायेत्यर्थ । १ बोधो ज्ञानम् ।

२ अष्टाध्यायीव्याकरणकारको दाक्षीपुत्रो मुनि पाणिनि । तनैव प्राकृतलक्षणनामक प्राकृतव्याकरणमपि रचितम् । 'यदाह पाणिनि स्वप्राकृतलक्षणे "व्यत्ययोऽप्यासाम् । इति । सूर्यप्रज्ञप्तिटीकाया तथा पञ्चसमम्रटीकायामपि 'यदाह पाणिनि प्राकृतलक्षणे–तृतीयार्थे सप्तमी यथा ' तिसु तेसु ' अलकिया पुहई ' इति । मलयगिर्याचार्येण निरदेशि ।

३ छन्द सूत्राणा प्रणेता पिङ्गलो मुनि ।

४ कणमत्तीति कणाद । तेन प्रणीत कणाददर्शनम् । अयमेवौलूक्य । उलूकस्य धैरपत्यमौलूक्य । अस्य दर्शनस्यौलूक्यदर्शनमिति नाम । अथ कणादो दशाध्यायात्मक दर्शनस्य प्रणेता । अत्र ( वैशेषिक ) मते पदार्था सप्त ।

५ षोडशपदार्थवादिना ( " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णय वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाना तत्त्वज्ञानान्नि श्रेयसाधिगम "। इति ।

यानि वा व्याकरणादिसूत्राणीत्येतदपि पर्यनुयुङ्क्ष्व । अनादय एवैता विद्याः संक्षेपविस्तरविवक्षया नवनवीभवन्ति तत्तत्कर्तृकाश्चोच्यन्ते । किं नाश्रौषीर्न कदाचिदनीदृशं जगदिति । यदि वा प्रेक्ष्य स्ववाचकमुख्यविरचितानि सकलशास्त्रचूडामणिभूतानि तत्त्वार्थसूत्राणीति ॥

यद्येवंअकलङ्कधर्मकीर्त्यादिवत् प्रकरणमेव किं नारभ्यते किमनया सूत्रकारत्वाहोपुरुषिकया । मैवं वोचः । भिन्नरुचिर्ह्ययं जनस्ततो नास्य स्वेच्छाप्रतिबन्धे लौकिकं राजकीयं वा शासनमस्तीति यत्किञ्चिदेतत् । तत्र वर्णसमूहात्मकैः पदैः पदसमूहात्मकैः सूत्रैः सूत्रसमूहात्मकैः प्रकरणैः प्रकरणसमूहात्मकैराह्निकैराह्निकसमूहा-

---

गौतमसूत्र १-१-१ ) अक्षपादेन गौतमेन न्यायशास्त्रं प्रणीतं न्यायशास्त्रं च पंचाध्यायात्मकम् । अत्र प्रत्यध्यायमाह्निकद्वयम् । तत्र १ प्रथमाध्यायस्य प्रथमाह्निके प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय द्वितीये वादादिसप्तपदार्थलक्षणनिरूपणं कृतम् । २ द्वितीयाध्यायस्य प्रथमाह्निके संशयपरीक्षणं प्रमाणचतुष्टयाः ( १ प्रत्यक्ष, २ अनुमान, ३ शब्द, ४ उपमानम् ) प्रामाण्यशङ्कानिराकारणं च । द्वितीयेऽर्थापत्त्यादेरन्तर्भावनिरूपणम् । ३ तृतीयस्य प्रथमे आत्मशरीरेन्द्रियार्थपरीक्षणम् । द्वितीये बुद्धिमनःपरीक्षणम् । ४ चतुर्थस्य प्रथमे प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गपरीक्षणम् । द्वितीये दोषनिमित्तकत्वनिरूपणमवयव्यादिनिरूपणं च । ५ पञ्चमस्य प्रथमे जातिभेदनिरूपणम् । द्वितीये निग्रहस्थानभेदनिरूपणम् । अत्र मते पदार्थाः षोडश ।

१ तत्त्वार्थसूत्राणि भगवतोमास्वातिवाचकमुख्येन प्रणीतानि दशभिरध्यायैः । तत्र प्रथमेऽध्यायचतुष्ये जीवतत्त्वस्य वर्णनम् । पञ्चमे अजीव ( पुद्गल )स्य । षष्ठसप्तमयोरास्रवस्य । अष्टमे बन्धस्य । नवमे संवरनिर्जरयो । दशमे मोक्षतत्त्वस्य । संपूर्णसूत्रसंख्या ३४४ परिमिता । अयं सूत्रग्रन्थो दिगम्बरैः श्वेताम्बरैश्च पूज्यत्वेनाभिमन्यते । यत उभयमतवादिभिस्तैस्तैराचार्यैरस्य भाष्याणि व्याख्याश्च निर्मिताः । दिगम्बरेषु प्रायोऽस्य नाम्न उमास्वामित्वेन व्यवहार ।

२ सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयो । अनेकार्थसंग्रहे का. २ श्लो ४५८

३ एकस्मिन्नाह्नि भवमाह्निकम् ।

रमकैः पञ्चभिरध्यायैः शास्त्रमेतदरचयदाचार्यः । तस्य च प्रेक्षावन्मप्रवृत्त्यङ्गमभिधेयमभिधातुमिदमादिसूत्रम् ॥

## ॥ अथ प्रमाणमीमांसा ॥ १-१-१ ॥

अथेत्यस्याधिकारार्थत्वाच्छास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य प्रमाणस्याभिधानात्सकलशास्त्रतात्पर्यव्याख्यानेन प्रेक्षावन्तो बोधिताः प्रवर्तिताश्च भवन्ति । आनन्तर्यार्थो वाऽथशब्दः शब्दकाव्यछन्दोनुशासनेभ्योऽनन्तरं प्रमाणं मीमांस्यत इत्यर्थः । अनेन शब्दानुशासनादिभिरस्यैककर्तृकत्वमाह । अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानकुसुमदामजलकुम्भादेर्दर्शनमिव श्रवणं मङ्गलायापि कल्पत इति, मङ्गले च सति परिपन्थिविघ्नविघातादक्षेपेण शास्त्रसिद्धिरायुष्मच्छ्रोतृकता च भवति । परमेष्ठिनमस्कारादिकं तु मङ्गलं कृतमपि न निवेशितं लाघवार्थिना शास्त्रकारेणेति ।

---

१ 'शास्त्र ग्रन्थनिदेशयो' इति अनेकार्थसङ्ग्रहे २ का. श्लो. ४५१.

२ प्रेक्षावन्तो विचारिणः ।

३ हेमचन्द्राचार्यैरष्टाध्यायात्मक संस्कृतप्राकृतभाषाव्याकरण सूत्रैर्निबद्धम् । तत्र सप्ताध्यायाः संस्कृतव्याकरण उपयुक्ताः । अष्टमोऽध्यायः प्राकृतव्याकरणे । तथा च काव्यानुशासनमष्टाध्यायात्मकमेव साहित्यशास्त्रसर्वविषयनिदर्शकं निबद्धम् । एवमेव छन्दःशास्त्रेऽपि ग्रन्थोऽष्टाध्यायात्मकः । तत्र प्रथमः सञ्ज्ञाध्यायः । द्वितीयः समवृत्तव्यावर्णनाध्यायः । तृतीयोऽर्धसमविषमवैतालीयमात्रासमकादिव्यावर्णनाध्यायः । चतुर्थ आर्याद्युत्साहादिप्रतिपादनाध्यायः । पञ्चम उत्साहादिप्रतिपादनाध्यायः । षष्ठः गलितकखञ्जकशीर्षकव्यावर्णनाध्यायः । सप्तमो द्विपदीव्यावर्णनाध्यायः । अष्टमः प्रस्तारादिव्यावर्णनाध्यायः । अत्रानुशासनत्रये स्वोपज्ञवृत्तिरप्यस्ति ।

४ अक्षेपेण—कालविलम्बाभावेन ।

५ तथाचोक्तं पातञ्जलमहाभाष्ये १।१।१ इत्यत्र 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते । वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि च । अध्येतारश्च वृद्धियुक्ता यथा स्युरिति ।

६ परमे पदे तिष्ठतीति परमेष्ठिः, अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुषु पञ्चसु प्रसिद्धः ।

प्रकर्षेण संशयादि व्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणं प्रमायां साधकतमम् । तस्य मीमांसा उद्देशादिरूपेण पर्यालोचनम् । त्रयी हि शास्त्रस्य प्रवृत्तिः १ उद्देशः २ लक्षणम् ३ परीक्षा च । तत्र नामधेयमात्रकीर्तनमुद्देशः । यथेदमेव सूत्रम् । उद्दिष्टस्यासाधारणधर्म्मवचनं लक्षणम् । तद्द्वेधा १ सामान्यलक्षणम् २ विशेषलक्षणं च । सामान्यलक्षणमनन्तरमेव सूत्रम् (१।१।२) विशेषलक्षणं विशदः प्रत्यक्षम् (१।१।१३) इति । विभागस्तु विशेषलक्षणस्यैवाङ्गमिति न पृथगुच्यते । लक्षितस्येवमित्थं भवति नेत्थमिति न्यायतः परीक्षणं परीक्षा, यथा तृतीयसूत्रम् (१।१।३)। पूजितविचारवचनश्च मीमांसाशब्दः। तेन न प्रमाणमात्रस्यैव विचारोऽत्राधिकृतः । किन्तु तदेकदेशभूतानां दुर्नयनिराकरणद्वारेण परिशोधितमार्गाणां नयानामपि । "प्रमाणनयैरधिगमः" इति हि वाचकमुख्यः, सकलपुरुषार्थेषु मूर्धाभिषिक्तस्य सोपायस्य सप्रतिपक्षस्य मोक्षस्य च । एवं हि पूजितो विचारो भवति । प्रमाणमात्रविचारस्तु प्रतिपक्षनिराकरणपर्यवसायी वाक्कलहमात्रं स्यात् । तद्विवक्षायां तु अथ प्रमाणपरीक्षेत्येव क्रियेत । तत् स्थितमेतत् प्रमाणनयपरिशोधितप्रमेयमार्गं सोपायं सप्रतिपक्षमोक्षं विवक्षितुं मीमांसाग्रहणमकार्याचार्येणेति ॥ १ ॥

तत्र प्रमाणसामान्यलक्षणमाह—

---

१ मुक्ति° ।

२ तत्त्वार्थाधिगमसूत्रे–अध्याय १ सूत्र ६ । भाष्यञ्च एषां च जीवादीनां तत्त्वानां यथोद्दिष्टानां नामादिभिर्न्यस्तानां प्रमाणनयैर्विस्तराधिगमो भवति । तत्र प्रमाणं द्विविधम् । परोक्षं प्रत्यक्षं च चतुर्विधमित्येके नयवादान्तरेण । नयाश्च नैगमादयः । ( नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः° । तत्त्वार्थाधिगमसूत्र १–३४ )

३ श्रेष्ठस्य ।

## ॥ सम्यगर्थनिर्णयः प्रमाणम् ॥ १-१-२ ॥

प्रमाणमिति लक्ष्यनिर्देशः। शेषं लक्षणम्। प्रसिद्धानुवादेन ह्यप्रसिद्धस्य विधानं लक्षणार्थः। तत्र यत्तदविवादेन प्रमाणमिति धर्मि प्रसिद्धं तस्य सम्यगर्थनिर्णयात्मकत्वं धर्मो विधीयते। अत्र प्रमाणत्वादिति हेतुः। नच धर्मिणो हेतुत्वमनुपपन्नम्, भवति हि विशेषे धर्मिणि तत् सामान्यं हेतुर्यथाऽयं धूमः साग्निर्धूमत्वात् पूर्वोपलब्धधूमवत्। न च दृष्टान्तमन्तरेण न गमकत्वम्। अन्तर्व्याप्त्यैव साध्यसिद्धेः। सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यादिवदिति दर्शयिष्यते। तत्र निर्णयः संशयाऽनध्यवसायाविकल्पत्वरहितं ज्ञानम्। ततो निर्णयपदेनाज्ञानरूपस्येन्द्रियसन्निकर्षादेर्ज्ञानरूपस्यापि संशयादेः प्रमाणत्वनिषेधः। अर्यतेऽर्थ्यते वाऽर्थो हेयोपादेयोपेक्षणीयलक्षणः। हेयस्य हातुम् उपादेयस्योपादातुम् उपेक्षणीयस्योपेक्षितुमर्थ्यमानत्वात्। न चानुपादेयत्वादुपेक्षणीयो हेय एवान्तर्भवति। अहेयत्वादुपादेय एवान्तर्भावप्रसक्तेः। उपेक्षणीय एव च मूर्द्धाभिषिक्तोऽर्थो योगिभिस्तस्यैवार्यमाणत्वात्। अस्मदादीनामपि हेयोपादेयाभ्यां भूयानेवोपेक्षणीयोऽर्थः। तन्नायमुपेक्षितुं क्षमः। अर्थस्य निर्णय इति कर्मणि षष्ठी। निर्णीयमानत्वेन व्याप्यत्वादर्थस्य। अर्थग्रहणं च स्वनिर्णयव्यवच्छेदार्थं तस्य सतोऽप्यलक्षणत्वादिति वक्ष्यामः। सम्यगित्यविपरीतार्थमव्ययं समञ्चतेर्वा रूपं तच्च निर्णयस्य विशेषणं तस्यैव सम्यक्त्वाऽसम्यक्त्वयोगेन विशेषयितुमुचितत्वात्। अर्थस्तु स्वतो न सम्यग्नाप्यसम्यगिति सम्भवव्यभिचारयोरभावान्न विशेषणीयः।

---

१ लक्षणसूत्रम् १-२-६।

२ लक्षणसूत्रम् १-२-१३।

३ स्व॰ निर्णय।

४ विशेषण दातुम्।

५ सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्। न शैत्येन न चौष्ण्येन वह्निः क्वापि विशिष्यते। १।

तेन सम्यग् योऽर्थनिर्णय इति विशेषणाद्विपर्ययनिरासः। ततोऽतिव्याप्त्यव्याप्त्यसम्भवदोषविकलमिदं प्रमाणसामान्यलक्षणम् ॥ २ ॥

नन्वर्थनिर्णयवत्स्वनिर्णयोऽपि वृद्धैः प्रमाणलक्षणत्वेनोक्तः प्रमाणं स्वपरावभासीति। स्वार्थव्यवसायात्मकं प्रमाणमिति च। न चासावसन्। घटमहं जानामीत्यादौ कर्तृकर्मवज् ज्ञप्तेरप्यवभासमानत्वात्। न चाप्रत्यक्षोपलम्भस्यार्थदृष्टिः प्रसिद्ध्यति। न च ज्ञानान्तरात् तदुपलम्भसम्भावनम्। तस्यानुपलब्धस्य प्रस्तुतोपलम्भप्रत्यक्षीकाराभावात्। उपलम्भान्तरसम्भावने चानवस्था। अर्थोपलम्भात्तस्योपलम्भेऽन्योन्याश्रयदोषः। एतेनार्थस्य सम्भवो नोपपद्यते न चैतज् ज्ञानं स्यात् इत्यर्थापत्त्यापि तदुपलम्भः प्रत्युक्तः। तस्या अपि ज्ञापकत्वेऽनाज्ञाताया ज्ञापकत्वायोगात्। अर्थापत्त्यन्तरात् तज्ज्ञानेऽनवस्थेतरेतराश्रयदोषापत्तेस्तदवस्थः परिभवः। तस्मादर्थोन्मुखतयेव स्वोन्मुखतयापि ज्ञानस्य प्रतिभासात् स्वनिर्णयात्मकत्वमप्यस्ति। नन्वनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः। मैवं वोचः। ज्ञातुर्ज्ञातृत्वेनेवाऽनुभूतेरनुभूतित्वेनैवानुभवात्। न चानुभूतेरनुभाव्यत्वं दोषः। अर्थापेक्षयानुभूतित्वात्, स्वापेक्षयाऽनु-

१ अर्थस्य निर्णयोऽर्थनिर्णय सम्यक् चासौ अर्थनिर्णयश्च।

२ अलक्ष्यवृत्तित्वमतिव्याप्ति। यथा गो शृङ्गित्वम्। लक्ष्यभिन्नमलक्ष्य तत्र लक्षणसत्त्वम्। शृङ्गित्व लक्ष्यभिन्नमहिष्यादिषु वर्तते। अतस्तदतिव्याप्तम्।

३ लक्ष्यैकदेशावृत्तित्वमव्याप्ति। यथा गो कपिलत्वम्। लक्ष्यस्यैकदेशे लक्षण स्यासत्त्वम्। प्रकृते लक्ष्या गाव। तदेकदेश शुक्ला गाव। तत्र कपिलत्वस्या सत्त्वादव्याप्ति।

४ लक्ष्यमात्रावर्तनमसम्भव। यथा गोरेकशफत्वम्। कस्मिन्नपि लक्ष्ये लक्षणा सत्त्वम्। एकशफत्व न कस्यामपि गवि वर्तते। अतस्तदसम्भवदोषदूषितम्। )

५ प्रमाण स्वपराभासि ज्ञान बाधविवर्जितम्। प्रत्यक्ष च परोक्ष च द्विधा मेयविनिश्चयात्॥ श्रीसिद्धसेनदिवाकरप्रणीत न्यायावतार श्लोक १।

भाव्यत्वात् । स्वपितृपुत्रापेक्षयैकस्य पितृत्वपुत्रत्ववद्विरोधाभावात् । न च स्वात्मनि क्रियाविरोधः । अनुभवसिद्धेऽर्थे विरोधासिद्धेः । अनुमानाच्च स्वसंवेदनसिद्धिः । तथाहि ज्ञानं प्रकाशमानमेवार्थं प्रकाशयति प्रकाशकत्वात् प्रदीपवत् संवेदनस्य प्रकाशकत्वात् । प्रकाशकत्वमसिद्धमिति चेत् । न । अज्ञाननिरासादिद्वारेण प्रकाशकत्वोपपत्तेः । न च नेत्रादिभिरनैकान्तिकता । तेषां भावेन्द्रियैरुपाणामेव प्रकाशकत्वात् । भावेन्द्रियाणां च स्वसंवेदनरूपतेव न व्यभिचारः । तथा संवित् स्वप्रकाशा अर्थप्रतीतित्वात् । यः स्वप्रकाशो न भवति नासावर्थप्रतीतिर्यथा घटः । तथा यज्ज्ञानं तदात्मबोधं प्रत्यनपेक्षितपरव्यापारं यथा गोचरान्तरग्राहिज्ञानप्राग्भाविगोचरान्तरग्राहिज्ञानप्रबन्धस्यान्त्यज्ञानम् । ज्ञानं च विवादाध्यासितं रूपादिज्ञानमिति, संवित् स्वप्रकाशे स्वावान्तरजातीयं नापेक्षते वस्तुत्वात् घटवत् । संवित् परप्रकाश्या वस्तुत्वाद्घटवदिति चेत् न । अस्याप्रयोजकत्वात् । न खलु घटस्य वस्तुत्वात् परप्रकाश्यता अपि तु बुद्धिव्यतिरिक्तत्वात् । तस्मात् स्वनिर्णयोऽपि प्रमाणलक्षणमस्त्वित्याशङ्कायामाह—

---

१ लक्षण २-१-२१

२ "लब्ध्युपयोगौ भावेन्द्रियम्" । तत्त्वार्थसूत्र २-१८ भाष्यम्-लब्ध्युपयोगश्च भावेन्द्रियं भवति । लब्धिर्नाम गतिजात्यादिनामकर्मजनिता तदावरणीयकर्मक्षयोपशमजनिता चेन्द्रियाश्रयकर्मोदयनिर्वृत्ता च जीवस्य भवति । सा पञ्चविधा स्पर्शनेन्द्रियलब्धिरसनेन्द्रियलब्धिघ्राणेन्द्रियलब्धिचक्षुरिन्द्रियलब्धिश्रोत्रेन्द्रियलब्धिरिति । स्पर्शादिषु 'स्पर्शनरसनघ्राणचक्षुश्श्रोत्राणि' (त.२ ८) (तत्त्वार्थ २ २०) मतिज्ञानोपयोग इत्यर्थः । उक्तमेतत् 'उपयोगो लक्षणम्' (त.२ ८) उपयोग प्रणिधानमायोगस्तद्भाव परिणाम इत्यर्थः । एषा च सत्या निर्वृत्त्युपकरणोपयोगौ भवत । सत्यां च लब्धौ निर्वृत्त्युपकरणोपयोगा भवन्ति । निर्वृत्त्यादीनामेकतराभावे विषयालोचनं न भवति । जिज्ञासुभि सर्वार्थसिद्धितत्त्वार्थश्लोकवार्तिकतत्त्वार्थराजवार्तिकादयो द्रष्टव्या । विस्तरभयान्न सगृह्यन्ते ।

३ गोचर विषय ।

**॥स्वनिर्णयः सन्नप्यलक्षणमप्रमाणेऽपि भावात्॥१-१-३॥**

सन्नपीति परोक्तमनुमोदते । अयमर्थो नयस्तीत्येव सर्वं लक्षणं वाच्यं किन्तु यो धर्म्मो विपक्षाद्व्यावर्त्तते । स्वनिर्णयस्त्वप्रमाणेऽपि संशयादौ वर्त्तते । नहि काचित् ज्ञानमात्रा सास्ति या न स्वसंविदिता नाम ततो न स्वनिर्णयो लक्षणमुक्तोऽस्माभिः । वृद्धैस्तु परीक्षार्थमुपक्षिप्त इत्यदोषः ॥ ३ ॥

ननु च परिच्छिन्नमर्थं परिच्छिन्दता प्रमाणेन पिष्टं[1] पिष्टं स्यात् । तथा च गृहीतग्राहिणां धारावाहिकज्ञानानामपि प्रामाण्यप्रसङ्गः[2] । ततोऽपूर्वार्थनिर्णय इत्यस्तु लक्षणम् । यथाहुः " स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् " इति । तथा–' अपूर्वार्थविज्ञानम्[3] ' इति च । तत्राह—

**॥ ग्रहीष्यमाणग्राहिण इव गृहीतग्राहिणोऽपि नाप्रामाण्यम् ॥ १-१-४ ॥**

अयमर्थः । द्रव्यापेक्षया वा गृहीतग्राहित्वं विप्रतिपिध्येत पर्यायापेक्षया वा । तत्र पर्यायापेक्षया धारावाहिकज्ञानानामपि गृहीतग्राहित्वं न सम्भवति । क्षणिकत्वात् पर्यायाणाम् । तत्कथं तन्निवृत्त्यर्थं विशेषणमुपादीयते । अथ द्रव्यापेक्षया । तदप्ययुक्तम् । द्रव्यस्य नित्यत्वादेकत्वेन गृहीतग्रहीष्यमाणावस्थयोर्न भेदः । ततश्च कं विशेषमाश्रित्य ग्रहीष्यमाणग्राहिणः प्रामाण्यं न गृहीतग्राहिणः । अपि च अवग्रहेहादीनां[4] गृहीतग्राहित्वेऽपि प्रामाण्यमिष्यत एव । न चैषां भिन्न-

---

१ पिष्टस्य पेषणं नास्ति मृतस्य मरणं नहि ॥ इति न्यायात्

२ एकस्मिन्नेव घटे " घटोऽयं घटोऽयम् " इत्येवमुत्पद्यमानान्युत्तरोत्तरज्ञानानि धारावाहिकज्ञानानि ।

३ दिगम्बराचार्यमाणिक्यनन्दिकृते परीक्षामुखे प्रथमोद्देशे प्रथमसूत्रम् ।

४ आदिशब्दादीहावायधारणाग्रहणम् । एतेषां लक्षणं क्रमेण १-१-२७, १-१-२८, १-१-२९, १-१-३० सूत्रे द्रष्टव्यम् ।

विषयत्वम् । एवं ह्यवगृहीतस्याऽनीहनादीहितस्यानिश्चयादसमञ्जसमापद्येत । न च पर्यायापेक्षयानधिगतविशेषावसायादपूर्वार्थत्वं वाच्यम् । एवं हि न कस्यचिद् गृहीतग्राहित्वमित्युक्तप्रायम् । स्मृतेश्च प्रमाणत्वेनाभ्युपगताया गृहीतग्राहित्वमेव सतत्त्वम् । यैरपि स्मृतेरप्रामाण्यमिष्टं तैरप्यर्थादनुत्पाद एव हेतुत्वेनोक्तो न गृहीतग्राहित्वम् । यदाह "न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् । अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम्" इति ॥ ४ ॥

अथ प्रमाणलक्षणप्रतिक्षिप्तानां संशयानध्यवसायविपर्ययाणां लक्षणमाह—

**॥अनुभयत्रोभयकोटिसंस्पर्शी प्रत्ययः संशयः॥१-१-५॥**

अनुभयस्वभावे वस्तुनि उभयान्तपरिमर्शनशीलं ज्ञानं सर्वात्मना शेत इवात्मा यस्मिन् सति स संशयः । यथान्धकारे दूरादूर्ध्वाकारवस्तूपलम्भात् साधकबाधकप्रमाणाभावे सति स्थाणुर्वा पुरुषो वेति प्रत्ययः । अनुभयत्रग्रहणमुभयरूपे वस्तुन्युभयकोटिसंस्पर्शेऽपि संशयत्वनिराकरणार्थम् । यथास्ति च नास्ति च घटः, नित्यश्चानित्यश्चात्मेत्यादि ॥ ५ ॥

**॥ विशेषानुल्लेख्यनध्यवसायः ॥ १-१-६ ॥**

दूरान्धकारादिवशादसाधारणधर्मावमर्शरहितः प्रत्ययोऽनिश्चयात्मकत्वादनध्यवसायः । यथा किमेतदिति । यद्यप्यविकल्पकं प्रथमक्षणभावि परेषां प्रत्यक्षप्रमाणत्वेनाभिमतं तदप्यनध्यवसाय एव । विशेषोल्लेखस्य तत्राप्यभावादिति ॥ ६ ॥

**अतस्मिंस्तदेवेति विपर्ययः ॥ १-१-७ ॥**

यज्ज्ञाने प्रतिभासिते तद्रूपरहिते वस्तुनि तदेवेति प्रत्ययो विपर्यासरूपत्वाद्विपर्ययः । यथा धातुवैषम्यान्मधुरादिद्रव्येषु तिक्तादि-

---

१ वातपित्तश्लेष्माणो धातवः ।

प्रत्ययः। तिमिरादिदोषादेकस्मिन्नपि चन्द्रे द्विचन्द्रादिप्रत्ययः। नौयानादगच्छत्स्वपि वृक्षेषु गच्छत्प्रत्ययः। आशुभ्रमणादलातादावचक्रेऽपि चक्रप्रत्ययः। इत्यवसितं प्रमाणलक्षणम् ॥ ७ ॥

नन्वस्तूक्तलक्षणं प्रमाणम्। तत्प्रामाण्यं तु स्वतः परतो वा निश्चीयेत। न तावत् स्वतः। तद्धि संविदितत्वात् ज्ञानमित्येव गृह्णीयान्न पुनः सम्यक्त्वलक्षणं प्रामाण्यम्। ज्ञानत्वमात्रं तु प्रमाणाभाससाधारणम्। अपि च स्वतःप्रामाण्ये सर्वेषामविप्रतिपत्तिप्रसङ्गः[१]। नापि परतः। परं हि १ तद्गोचरगोचरं वा ज्ञानम् २ अभ्युपेतार्थक्रियानिर्भासं वा ३ तद्गोचरनान्तरीयकार्थदर्शनं वा। तच्च सर्वं स्वतोऽनवधृतप्रामाण्यमव्यवस्थितं सत् कथं पूर्वप्रवर्तकज्ञानं व्यवस्थापयेत्। स्वतो वाऽस्य प्रामाण्ये कोऽपराधः प्रवर्तकज्ञानस्य। येन तस्यापि तन्न स्यात्। न च प्रामाण्यं ज्ञायते स्वत इत्युक्तमेव परतस्त्वनवस्थेत्याशङ्क्याह—

## ॥ प्रामाण्यनिश्चयः स्वतः परतो वा ॥ १-१-८ ॥

प्रामाण्यनिश्चयः क्वचित् स्वतो यथाऽभ्यासदशापन्ने स्वकरतलादिज्ञाने, स्नानपानावगाहनोदन्योपशमादावर्थक्रियानिर्भासे वा प्रत्यक्षज्ञाने। नहि तत्र परीक्षाकाङ्क्षास्ति प्रेक्षावताम्। तथाहि जलज्ञानं ततो दाहपिपासार्त्तस्य तत्र प्रवृत्तिस्ततस्तत्प्राप्तिस्ततः स्नानपानादीनि ततो दाहोदन्योपशम इत्येतावतैव भवति कृती प्रमाता न पुनर्दाहोदन्योपशमज्ञानमपि परीक्षते इत्यस्य स्वतःप्रामाण्यम्। अनुमाने तु सर्वस्मिन्नपि सर्वथा निरस्तसमस्तव्यभिचाराशङ्के स्वत एव प्रामाण्यम्। अव्यभिचारिलिङ्गसमुत्थत्वात्। न लिङ्गाकारं ज्ञानं लिङ्गं विना, न च लिङ्गं लिङ्गिनं विनेति। क्वचित् परतः प्रामाण्यनिश्चयो यथा-

१ अविप्रतिपत्ति –अविरोध।

नभ्यासदशापन्ने प्रत्यक्षे । नहि तदर्थेन गृहीताव्यभिचारामिति तदेकदेशविषयात् संवादकात्, ज्ञानान्तराद्वा, अर्थक्रियानिर्भासाद्वा, नान्तरीयार्थदर्शनाद्वा तस्य प्रामांण्यं निश्चीयते । तेषां च स्वतःप्रामाण्यनिश्चयान्नानवस्थादिदौस्थ्यावकाशः । शाब्दे तु प्रमाणे दृष्टार्थेऽर्थाव्यभिचारस्य दुर्ज्ञानत्वात् संवादाद्यधीनः परतः प्रामाण्यनिश्चयः । अदृष्टार्थे तु दृष्टार्थग्रहोपरागनष्टमुष्ट्यादिप्रतिपादकानां संवादेन प्रामाण्यं निश्चित्य संवादमन्तरेणाप्याप्तोक्तत्वेनैव प्रामाण्यनिश्चय इति सर्वमुपपन्नम् । **अर्थोपलब्धिहेतुः प्रमाणमिति** नैयायिकाः । तत्रार्थोपलब्धौ हेतुत्वं यदि निमित्तत्वमात्रं तदा तत्सर्वकारकसाधारणमिति कर्तृकर्मादेरपि प्रमाणत्वप्रसङ्गः । अथ कर्तृकर्मादिविलक्षणं करणं हेतुशब्देन विवक्षितं तर्हि तज्ज्ञानमेव युक्तं नेन्द्रियसन्निकर्षादि । यस्मिन् हि सत्यर्थ उपलब्धो भवति स तत्करणम् । न चेन्द्रियसन्निकर्षसामग्र्यादौ सत्यपि ज्ञानाभावे स भवति । साधकतमं हि करणमव्यवहितफलं च तदिष्यते । व्यवहितफलस्यापि करणत्वे दधिभोजनादेरपि तथाप्रसङ्गः । तस्मा ज्ञानादन्यत्र प्रमाणत्वम् । अन्यत्रोपचारात् । **सम्यगनुभवसाधनं प्रमाणमित्यत्रापि** साधनग्रहणात् कर्तृकर्मनिरासेन करणस्य प्रमाणत्वं सिध्यति तथाप्यव्यवहितफलत्वेन साधकतमत्वं ज्ञानस्यैवेति तदेव प्रमाणत्वेनेष्टव्यम् । **प्रमाणमविसंवादिज्ञानमिति** सोगताः । तत्रापि यद्यविकल्पकं ज्ञानं तदा न तद् व्यवहारजननसमर्थम् । सांव्यवहारिकस्य चैतत्प्रमाणस्य लक्षणमिति च भवन्तः । तत्कथं तस्य प्रामाण्यम् । उत्तर-

१ 'उपलब्धिहेतुश्च प्रमाणम्' । इति गौतमसूत्रवात्स्यायनभाष्ये । पृ. १४ प. ४ ।

२ भासर्वज्ञप्रणीत न्यायसार प्रत्यक्ष परिच्छेदे सूत्र १ पृ. १ प. ८ ।

३ " अविसंवादक ज्ञान सम्यग्ज्ञानम् " न्यायबिन्दु पृ. ५ प. ९ ।

कालभाविनो व्यवहारजननसमर्थाद्विकल्पात् तस्य प्रामाण्ये याचितकमण्डनन्यायः[1]। वरं च व्यवहारहेतोर्विकल्पस्यैव प्रामाण्यमभ्युपगन्तुम्। एवं हि परम्परापरिश्रमः परिहृतो भवति। विकल्पस्य चाप्रामाण्ये कथं तन्निमित्तो व्यवहारोऽविसंवादी। दृष्टविकल्पयोरर्थयोरेकीकरणेन तैमिरिकज्ञानवत् संवादाभ्युपगमे चोपचरितं संवादित्वं स्यात्। तस्मादनुपचरितमविसंवादित्वं प्रामाण्यस्य लक्षणमिच्छता निर्णयः प्रमाणमेष्टव्य इति ॥ ८ ॥

प्रमाणसामान्यलक्षणमुक्त्वा परीक्ष्य च विशेषलक्षणं वक्तुकामो विभागमन्तरेण तद्वचनस्याशक्यत्वाद्विभागप्रतिपादनार्थमाह—

## ॥ प्रमाणं द्विधा ॥ १–१–९ ॥

सामान्यलक्षणसूत्रे प्रमाणग्रहणं परीक्षयान्तरितमिति न तदा[2] परामृष्टम्। किन्तु साक्षादेवोक्तं प्रमाणमिति। द्विधा द्विप्रकारमेव विभागस्यावधारणफलत्वात्। तेन प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः। प्रत्यक्षानुमानागमाः प्रमाणमिति वैशेषिकाः। तान्येवेति साङ्ख्याः। सहोपमानेन चत्वारीति नैयायिकाः। सहार्थापत्त्या पञ्चेति प्राभाकराः[3]। सहाभावेन[4] षडिति भाट्टाः। इति न्यूनाधिकप्रमाणवादिनः प्रतिक्षिप्ताः। तत्प्रतिक्षेपश्च वक्ष्यते[5] ॥ ९ ॥

तर्हि प्रमाणद्वैविध्यं किं तथा यथाहुः सौगताः प्रत्यक्षमनुमानं चेत्युतान्यथेत्याह—

---

[1] अस्य न्यायस्य स्वरूपम्। केनचिदकिञ्चनेन याचित्वा परमण्डनानि परगृहे विवाहादिसम्पादनार्थं गम्यते पर न तत् तस्य शोभायै पर्याप्तम्।

२ तच्छब्देन।

३ मीमांसकेषु मतत्रयम् १ प्राभाकर २ भाट्ट ३ मुरारिमिश्रञ्च।

४ अभाव —अनुपलब्धि।

५ १–१–१०, १–१–११, १–१–१२ सूत्रेषु।

## ॥ प्रत्यक्षं च परोक्षं च ॥ १-१-१० ॥

अश्नुते अक्ष्णोति वा व्याप्नोति सकलद्रव्यक्षेत्रकालभावानित्यक्षो जीवः। अश्नुते विषयमित्यक्षमिन्द्रियं च। प्रतिः प्रतिगतार्थः। अक्षं प्रतिगतं तदाश्रितम्। अक्षाणि चेन्द्रियाणि तानि प्रतिगतमिन्द्रियाण्याश्रित्योज्जिहीते यज्ज्ञानं तत्प्रत्यक्षं वक्ष्यमाणलक्षणम्। अक्षेभ्यः परतो वर्तत इति परेणेन्द्रियादिना चोक्ष्यत इति परोक्षं वक्ष्यमाणलक्षणमेव। चकारः स्वविषये द्वयोस्तुल्यबलत्वख्यापनार्थः। तेन यदाहुः सकलप्रमाणज्येष्ठं प्रत्यक्षमिति तदपास्तम्। प्रत्यक्षमितिपूर्वकत्वादितरप्रमाणानां तस्य ज्येष्ठतेति चेत्। न। प्रत्यक्षस्यापि प्रमाणान्तरपूर्वकत्वोपलब्धेः। लिङ्गादाप्तोपदेशाद्वा वह्न्यादिकमवगम्य प्रवृत्तस्य तद्विषयप्रत्यक्षोत्पत्तेः॥ १०॥

न प्रत्यक्षादन्यत्प्रमाणमिति लौकायतिकाः। तत्राह—

## ॥ व्यवस्थान्यधीनिषेधानां सिद्धेः प्रत्यक्षेतरप्रमाणसिद्धिः ॥ १-१-११ ॥

प्रमाणाप्रमाणविभागस्य परबुद्धेरतीन्द्रियार्थनिषेधस्य च सिद्धिर्नानुमानादिप्रमाणं विना। चार्वाको हि काश्चिज्ज्ञानव्यक्तीः संवादित्वेनाव्यभिचारिणीरुपलभ्यान्याश्च विसंवादित्वेन व्यभिचारिणीः पुनः कालान्तरे तादृशीतराणां ज्ञानव्यक्तीनामवश्यं प्रमाणेतरते व्यवस्थापयेत्। न च सन्निहितार्थबलेनोत्पद्यमानं पूर्वापरपरामर्शशून्यं प्रत्यक्षं पूर्वापरकालभाविनीनां ज्ञानव्यक्तीनां प्रामाण्याप्रामाण्यव्यवस्थापकं निमित्तमुपलक्षयितुं क्षमते। न चायं स्वप्रतीतिगोचराणामपि ज्ञानव्यक्तीनां परं प्रति प्रामाण्यमप्रामाण्यं वा व्यवस्था-

१ अक्षौटि व्याप्तौ ( है. धा. पा. ५-२९ )।
२ अशौ व्याप्तौ च ( है. धा. पा. १-५७० )।
३ लौकायतिकाः—चार्वाकाः।

पयितुं प्रभवति । तस्माद्यथादृष्टज्ञानव्यक्तिसाधर्म्यद्वारेणेदानीन्तनज्ञानव्यक्तीनां प्रामाण्याप्रामाण्यव्यवस्थापकं परप्रतिपादकं परोक्षान्तर्गतमनुमानरूपं प्रमाणान्तरमुपासीत । अपि च अप्रतिपित्सितमर्थं प्रतिपादयन्नायं लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः स्यात् न च प्रत्यक्षेण परचेतोवृत्तीनामधिगमोऽस्ति । चेष्टाविशेषदर्शनात्तदवगमे च परोक्षस्य प्रामाण्यमनिच्छतोऽप्यायातम् । परलोकादिनिषेधश्च न प्रत्यक्षमात्रेण शक्यः कर्तुम् । सन्निहितमात्रविषयत्वात्तस्य । परलोकादिकं चाप्रतिषिध्य नायं सुखेनास्ते प्रमाणान्तरं च नेच्छतीति हिम्भवेद्योध: । किञ्च प्रत्यक्षस्याप्यर्थाव्यभिचारादेव प्रामाण्यं तथार्थप्रतिबद्धलिङ्गशब्दद्वारा समुन्मज्जतः परोक्षस्याप्यर्थाव्यभिचारादेव किं नेष्यते । व्यभिचारिणोऽपि परोक्षस्य दर्शनादप्रामाण्यमिति चेत् । प्रत्यक्षस्यापि तिमिरादिदोषादप्रामाण्यस्य दर्शनात् सर्वत्राप्रामाण्यप्रसङ्गः । प्रत्यक्षाभासं तदिति चेत् । इतरत्रापि तुल्यमेतदन्यत्र पक्षपातात् । धर्मकीर्तिरप्येतदाह "प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ॥ १ ॥ अर्थस्यासम्भवे भावात् प्रत्यक्षेऽपि प्रमाणता । प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम् " ॥ २ ॥ इति यथोक्तसङ्ख्यायोगेऽपि च परोक्षार्थविषयमनुमानमेव सौगतैरुपगम्यते तदयुक्तम् । शब्दादीनामपि प्रमाणत्वात् । तेषां चानुमानेऽन्तर्भावयितुमशक्यत्वात् । एकेन तु सर्वसङ्ग्राहिणा प्रमाणेन प्रमाणान्तरसङ्ग्रहे नायं दोषः । तत्र यथेन्द्रियजमानसात्मसंवेदनयोगिज्ञानानां प्रत्यक्षेण सङ्ग्रहस्तथा स्मृतिप्रत्यभिज्ञानोहानुमानागमानां परोक्षेण सङ्ग्रहो लक्षणस्याविशेषात् । स्मृत्यादीनां च विशेषलक्षणानि स्वस्थान एव वक्ष्यन्ते । एवं परोक्षस्योपमानस्य प्रत्यभिज्ञाने अर्थापत्तेरनुमानेऽन्तर्भावोऽभिधास्यते ॥ ११ ॥

---

१ बालानामग्रह ।

२, १-२-३ सूत्रे। ३, १-२-४ सूत्रे। ४, १-२-७ सूत्रे।

यत्तु प्रमाणमेव न भवति न तेनान्तर्भूतेन वहिर्भूतेन वा किंचित् प्रयोजनम् । यथाऽभावः । कथमस्याप्रामाण्यम् । निर्विषयत्वाद् इति ब्रूमः । तदेव कथमिति चेत् ॥

## ॥ भावाभावात्मकत्वाद्वस्तुनो निर्विषयोऽभावः ॥ १-१-१२ ॥

नहि भावैकरूपं वस्त्विति । विश्वस्य वैश्वरूप्यप्रसङ्गात् । नाप्यभावैकरूपम् । नीरुपत्वप्रसङ्गात् । किन्तु स्वरूपेण सत्त्वात् पररूपेण चासत्त्वात् भावाभावरूपं वस्तु । तथैव प्रमाणानां प्रवृत्तेः । तथाहि प्रत्यक्षं तावद्भूतलमेवेदं घटादि न भवतीत्यन्वयव्यतिरेकद्वारेण वस्तु परिच्छिन्दत् तदधिकं विषयभावैकरूपं निराचष्ट इति कं विषयमाश्रित्याभावलक्षणं प्रमाणं स्यात् । एवं परोक्षाण्यपि प्रमाणानि भावाभावरूपवस्तुग्रहणप्रवणान्येव । अन्यथाऽसङ्कीर्णस्वस्वविषयग्रहणासिद्धेः । यदाह " अयमेवेति यो ह्येष भावे भवति निर्णयः । नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ " इति । अथ भवतु भावाभावरूपता वस्तुनः । किं नश्छिन्नम् । वयमपि हि तथैव प्रत्यपीपदाम । केवलं भावांश इन्द्रियसन्निकृष्टत्वात् प्रत्यक्षप्रमाणगोचरः । इति अभावांशस्तु न तथेत्यभावप्रमाणगोचर इति कथमविषयत्वं स्यात् । तदुक्तं " न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः । भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १ ॥ गृहीत्वा वस्तुसद्भावं स्मृत्वा च

१ श्लोक वा. सू. ५. अभावपरिच्छेदे श्लो. १५.

२ श्लोक वा. सू. ५. अभावपरिच्छेदे श्लो. १८.

३ 'इन्द्रियैरेषा' इति श्लोकवार्तिकेषु पाठः ।

४ 'उत्पद्यते' इति श्लोकवार्तिके पाठः ।

५ श्लोक वा. सू. ५ अभावपरिच्छेदे श्लो. २७.

प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥२॥" इति। ननु भावांशादभावांशस्याभेदे कथं प्रत्यक्षेणाग्रहणम्। भेदे वा घटाद्यभावरहितं भूतलं प्रत्यक्षेण गृह्यत इति घटादयो गृह्यन्त इति प्राप्तम्। तदभावग्रहणस्य तद्भावग्रहणनान्तरीयकत्वात्। तथा चाभावग्रहणमपि पश्चात्प्रवृत्तं न तानुत्सारयितुं पटिष्ठं स्यात्। अन्यथा सङ्कीर्णस्य सङ्कीर्णताग्रहणात् प्रत्यक्षं भ्रान्तं स्यात्। अपि चायं प्रमाणपञ्चकनिवृत्तिरूपत्वात् तुच्छः। तत एवाज्ञानरूपः कथं प्रमाणं भवेत्। तस्मादभावांशात्कथंचिदभिन्नं भावांशं परिच्छिन्दता प्रत्यक्षादिना प्रमाणेनाभावांशो गृहीत एवेति तदतिरिक्तविषयाभावान्निर्विषयोऽभावः। तथा च न प्रमाणमिति स्थितम् ॥ १२ ॥

विभागमुक्त्वा विशेषलक्षणमाह—

## ॥ विशदः प्रत्यक्षम् ॥ १-१-१३ ॥

सामान्यलक्षणानुवादेन विशेषलक्षणविधानात् सम्यगर्थनिर्णय इति प्रमाणसामान्यलक्षणमनूद्य विशद इति विशेषलक्षणं प्रसिद्धस्य प्रत्यक्षस्य विधीयते। तथा च प्रत्यक्षं धर्मि। विशदसम्यगर्थनिर्णयात्मकमिति साध्यो धर्मः। प्रत्यक्षत्वादिति हेतुः। यद्विशदसम्यगर्थनिर्णयात्मकं न भवति न तत् प्रत्यक्षम्। यथा परोक्षमिति व्यतिरेकी। धर्मिणो हेतुत्वेऽनन्वयदोष इति चेत्। न। विशेषे धर्मिणि धर्मिसामान्यस्य हेतुत्वात्। तस्य च विशेषनिष्ठत्वेन विशेषेष्वन्वयसम्भवात्। सपक्षे वृत्तिमन्तरेणापि च विपक्षव्यावृत्तिबलाद्गमकत्वमित्युक्तमेव ॥ १३ ॥

अथ किमिदं वैशद्यं नाम। यदि स्वविषयग्रहणं तत्परोक्षेऽप्यस्तु-

---

१ 'जायतेऽक्षानपेक्षणात्' इति श्लोकवार्त्तिके पाठः।

२ आवश्यकत्वात्। अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणता।

णम् । अथ स्फुटत्वं, तदपि स्वसंविदितत्वात् सर्वविज्ञानानां सम-
मित्याशङ्क्याह—

## ॥ प्रमाणान्तरानपेक्षेदन्तया प्रतिभासो वा वैशद्यम् ॥ १-१-१४ ॥

प्रस्तुतात् प्रमाणादन्यत् प्रमाणं शब्दलिङ्गादिज्ञानं तत् प्रमाणान्तरं तन्निरपेक्षता वैशद्यम् । नहि शब्दानुमानादिवत् प्रत्यक्षं स्वोत्पत्तौ शब्दलिङ्गादिज्ञानं प्रमाणान्तरमपेक्षते । इत्येकं वैशद्यलक्षणम् । लक्षणान्तरमपि इदन्तया प्रतिभासो वेति इदन्तया विशेषनिष्ठतया यः प्रतिभासः सम्यगर्थनिर्णयस्य सोऽपि वैशद्यम् । वाशब्दो लक्षणान्तरत्वसूचनार्थः ॥ १४ ॥

अथ मुख्यसांव्यवहारिकभेदेन द्वैविध्यं प्रत्यक्षस्य हृदि निधाय मुख्यस्य लक्षणमाह—

## ॥ तत्सर्वथावरणविलये चेतनस्य स्वरूपाविर्भावो मुख्यं केवलम् ॥ १-१-१५ ॥

तदिति प्रत्यक्षस्य परामर्शार्थम् । अन्यथानन्तरमेव वैशद्यमभिसम्बध्येत दीर्घकालनिरन्तरसत्कारासेवितरत्नत्रयप्रकर्षपर्यन्ते एकत्ववितर्काविचारध्यानबलेन निःशेषतया ज्ञानावरणीयादीना घातिकर्मणा प्रक्षये सति चेतनास्वभावस्यात्मनः प्रकाशस्वभावस्येति यावत्। स्वरूपस्य प्रकाशस्वभावस्य सत एवावरणापगमेनाविर्भाव आविर्भूतं स्वरूपं मुखमिव शरीरस्य सर्वज्ञानाना प्रधानं मुख्यं प्रत्यक्षम् । तच्चेन्द्रियादिसाहाय्यकाविरहात् सकलविषयत्वादसाधारणत्वाच्च केवलमित्यागमे प्रसिद्धम् । प्रकाशस्वभावता कथमात्मनः सिद्धेति चेत् ।

१ ज्ञानदर्शनचारित्राणि इति रत्नत्रयम् ।

२ आदिशब्दात् दर्शनावरणमोहनीयान्तरायाख्यकर्मणो ग्रहणम् । लक्षण असिध्द

प्रमे पृ १८ प २२ । ३ प्र न लो प २ सू २३

एते ब्रूमः । आत्मा प्रकाशस्वभावोऽसन्दिग्धस्वभावत्वात् । यः प्रकाशस्वभावो न भवति नासावसन्दिग्धस्वभावो यथा घटः । न च तथात्मा । न खलु कश्चिदहमस्मि न वेति सन्दिग्धे । इति । नासिद्धो हेतुः । तथात्मा प्रकाशस्वभावो बोद्धृत्वात् । यः प्रकाशस्वभावो न भवति नासौ बोद्धा यथा घटः । न च न बोद्धात्मेतीति । तथा यो यस्याः क्रियायाः कर्ता न स तद्विषयो यथा गतिक्रियायाः कर्ता चैत्रो न तद्विषयो ज्ञप्तिक्रियायाः कर्ता चात्मेति । अथ प्रकाशस्वभावत्व आत्मनः कथमावरणम् । आवरणे वा सततावरणप्रसङ्गः । नैवम् । प्रकाशस्वभावस्यापि चन्द्रार्कादेरिव रजोनीहाराभ्रपटलादिभिरिव ज्ञानावरणीयादिकर्मभिरावरणस्य सम्भवात् । चन्द्रार्कादेरिव च प्रबलपवमानप्रायैर्ध्यानभावनादिभिर्विलयस्य चेति । ननु सादित्वे स्यादावरणस्योपायतो विलयः । नैवम् । अनादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिना विलयोपलम्भात् तद्वदेवानादेरपि ज्ञानावरणीयादिकर्मणः प्रतिपक्षभूतरत्नत्रयाभ्यासेन विलयोपपत्तेः । न चामूर्तस्यात्मनः कथमावरणमिति वाच्यम् । अमूर्ताया अपि चेतनाशक्तेर्मदिरामदनकोद्रवादिभिरावरणदर्शनात् । अथावरणीयतत्पक्षाभ्यामात्मा विक्रियेत न वा । किं चातः । "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् । चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः" इति चेत् । न । अस्य दूषणस्य

१ आदिशब्दात् पढम १ नाणावरण, बीय पुण २ दसणस्स आवरण । तइय च ३ वेयणीय, तहा चउत्थ च ४ मोहणिय ॥५॥ ५ आऊ ६ नाम ७ गोय, अट्ठमिय ८ अतराइय होइ, । इति कर्मग्रन्थ १ गाथा ५-६ । व्याख्या—प्रथममाद्य ज्ञानावरण ज्ञानस्यावरणमाच्छादन क्रियते येन कर्मणा तज्ज्ञानावरणम् । तस्य स्वभावोऽर्थानवगम । एतत्कर्मादित्यप्रभाच्छादकमेघवज्ज्ञातृत्वशक्तिमावृणोति । १ । दृश्यतेऽनेनेति दर्शन तस्यावरण दर्शनावरण तस्य स्वभावोऽर्थानालोचनम् । एतत्कर्म प्रदीपप्रभातिरोधायककुम्भवद्दर्शनमावृणोति । २ । वेद्यते आह्लादादिरूपेणानुभूयते यत्तद्वेदनीयम् । यद्यपि च

कूटस्थानित्यतापक्ष एव सम्भवात्। परिणामिनित्यश्चात्मेति तस्य पूर्वापरपर्यायोत्पादविनाशसहितानुवृत्तरूपत्वात्। एकान्तनित्यक्षणिकपक्षयोः सर्वथार्थक्रियाविरहात्। यदाह "**अर्थक्रिया न युज्येत नित्यक्षणिकपक्षयोः। क्रमाक्रमाभ्यां भावानां सा लक्षणतया मता**" इति॥ १५॥

ननु प्रमाणाधीना प्रमेयव्यवस्था। न च मुख्यप्रत्यक्षस्य तद्वतो वा सिद्धौ किञ्चित् प्रमाणमस्ति। प्रत्यक्षं हि रूपादिविषयविनिर्मितव्यापारं नातीन्द्रियेऽर्थे प्रवर्तितुमुत्सहते। नाप्यनुमानम्। प्रत्यक्षदृष्टलिङ्गलिङ्गिसम्बन्धबलोपजनितधर्मकत्वात्तस्य। आगमस्तु यद्यतीन्द्रियज्ञानपूर्वकस्तत्साधकस्तदेतरेतराश्रयः। "**नर्ते तदागमात्सिध्येन्न च तेनागमो विना**" इति। अपौरुषेयस्तु तत्सा-

सर्वं कर्म वेद्यते तथापि पङ्कजादिशब्दवत् वेदनीयशब्दस्य रूढिविषयत्वात् स ख्यात सुखदुःखसंवेदनम्। (सुखदुःख) रूपमेव कर्म वेदनीयमित्युच्यते। तस्य स्वभाव एतत्कर्म सुख दुःख चोत्पादयति २। दर्शनचारित्रे च मोहमुत्पादयति मोहयति सदसद्विवेकविकल करोत्यात्मानमिति वा मोहनीयम्। आद्यस्य (दर्शनमोहनीयस्य) स्वभावस्तत्त्वार्थाश्रद्धानम्। एतत्कर्म दुर्जनसङ्गवत्तत्त्वार्थेऽश्रद्धामुत्पादयति। द्वितीयस्य (चारित्रमोहनीयस्य) स्वभाव इन्द्रियनियमनाभाव। एतत्कर्म त्वाचरण इन्द्रियाणाम व्यवस्थामुत्पादयति ४। एति गच्छति गत्यन्तरमनेनेत्यायु। आयुर्नामकर्मण स्वभावो भवधारणम्। एतत्कर्म तत्तिर्णा मनुष्यपश्वादीना जल्वदेह धारयति ५। नामयति गत्यादिपर्यायानुभवन प्रति प्रवणयति जीवमिति। नामसंज्ञककर्मण स्वभावो नारकादिनामकरणम्। एतत्कर्म चित्रकारवन्नानाविधा सज्ञा आधत्ते ६। गूयते शब्द्यते उच्चावचै शब्दैरात्मा यस्मात्तद्गोत्रम्। गोत्रकर्मण स्वभाव उच्चनीचसंशब्दनम्। एतत्कर्म कुम्भकारो घटेष्विव शरीर उच्चनीचावस्था सपादयति ७। जीव दानादिक चान्तरा एति न जीवस्य दानादिक कर्तु ददातीत्यन्तरायम् अन्तरायकम्। एतत्कर्म कृपणवद्दानादिषु विघ्नमुत्पादयति। इति ज्ञेयम्।

१ श्लोकवार्तिक सूत्र २ श्लोक १४२।

धर्मो नास्त्येव । योऽपि " अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् " इत्यादिः कश्चिदर्थवादरूपोऽस्ति नासौ प्रमाणम् । विधावेव प्रामाण्योपगमात् । प्रमाणान्तराणां चात्रानवसर एवेत्याशङ्क्याह–

**॥ प्रज्ञातिशयविश्रान्त्यादिसिद्धेस्तत्सिद्धिः ॥१-१-१६॥**

प्रज्ञाया अतिशयस्तारतम्यं क्वचिद्विश्रान्तमतिशयत्वात् परिमाणातिशयवदित्यनुमानेन निरतिशयप्रज्ञासिसिद्धा तस्य केवलज्ञानस्य सिद्धिः । तत्सिद्धिरूपत्वात् केवलज्ञानसिद्धेः । आदिग्रहणात् सूक्ष्मान्तरितदूरार्थाः कस्यचित् प्रत्यक्षाः प्रमेयत्वात् घटवदित्यतो ज्योतिर्ज्ञानाविसंवादान्यथानुपपत्तेश्च तत्सिद्धिः । यदाह " धीरत्यन्तपरोक्षेऽर्थे न चेत् पुंसां कुतः पुनः । ज्योतिर्ज्ञानाविसंवादः श्रुताच्चेत्साधनान्तरम् " । अपि च नोदना हि भूतं भवन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमेवञ्जातीयकमर्थमवगमयति नान्यत्किंचनेन्द्रियमिति वदता भूताद्यर्थपरिज्ञानं कस्यचित् पुंसोऽभिमतमेव । अन्यथा कस्मै वेदस्त्रिकालविषयमर्थं निवेदयेत् । स हि निवेदयंस्त्रिकालविषयतत्त्वज्ञमेवाधिकारिणमुपादत्ते । तदाह । " त्रिकालविषयं तत्त्वं कस्मै वेदो निवेदयेत् । अक्षय्यावरणैकान्तान्न चेद्वेद तथा नरः " इति, त्रिकालविषयवस्तुनिवेदनाऽन्यथानुपपत्ते-

१ श्वेताश्वतरोपनिषद् ३-१९ ।

२ ' आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां, तस्मादनित्यमुच्यते ' इति जैमिनिसूत्रम् । ( जै १-२-१ )

३ केवलज्ञानलक्षणम् ' सकलं तु सामग्रीविशेषतः समुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ' । इति प्रमाणनयतत्त्वालोकालङ्कारे परिच्छेद २ सूत्रम् २३ ।

रितीन्द्रियकेवलज्ञानसिद्धिः । किञ्च प्रत्यक्षानुमानसिद्धसंवादं शास्त्रमेवातीन्द्रियार्थदर्शिसद्भावे प्रमाणम् । य एव हि शास्त्रस्य विषयः स्याद्वादः स एव प्रत्यक्षादेरपीति संवादः । तथाहि " **सर्वमस्ति स्वरूपेण पररूपेण नास्ति च । अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसम्भवः** " इति दिशा प्रमाणसिद्धं स्याद्वादं प्रतिपादयन्नागमोऽर्हतस्सर्वज्ञतामपि प्रतिपादयति, यदस्तुम " **यदीयसम्यक्त्वबलात् प्रतीमो भवादृशानां परमात्मभावम् । कुवासनापाशविनाशनाय नमोऽस्तु तस्मै तव शासनाय** "[१] इति । प्रत्यक्षं तु यद्यप्यैन्द्रियिकं नातीन्द्रियज्ञानविषयं तथापि समाधिबललब्धजन्मकयोगिप्रत्यक्षमेव बाह्यार्थस्येव स्वस्यापि वेदकमिति प्रत्यक्षतोऽपि तत्सिद्धिः । अथ "**ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्** " । इति वचनात्सर्वज्ञत्वमीश्वरादीनामस्तु । मानुषस्य तु कस्यचिद्विद्याचरणवतोपि तदसम्भावनीयम् । यत्कुमारिलः । "**अथापि वेददेहत्वाद्[२] ब्रह्मविष्णुमहेश्वराः । कामं भवन्तु सर्वज्ञाः सार्वज्ञ्यं मानुषस्य किम् ॥** " इति, आः सर्वज्ञापलापपातकिन् दुर्वदवादिन् मानुषत्वनिन्दार्थवादापदेशेन देवाधिदेवानाधिक्षिपसि । ये हि जन्मान्तरार्जितोर्जितपुण्यप्राग्भाराः सुरभवभवमनुपमं सुखमनुभूय दुःखपङ्कमग्नमखिलं जीवलोकमुद्दिधीर्षवो नरकेष्वपि क्षणं क्षिप्तसुखासिकामृतवृष्टयो मनुष्यलोकमवतेरुः जन्मसमयसमकालचलितासनसकलसुरेन्द्रवृन्दविहितजन्मोत्सवाः किङ्करायमाणसुरसमूहाहमहमिकारब्धसेवाविधयः स्वयमुपनतामतिप्राज्यसाम्राज्यश्रियं तृणवदवधूय समतृण-

---

१ श्रीहेमचन्द्राचार्यकृतायोगव्यवच्छेदद्वात्रिंशिका श्लोक २१ ।

२ अह पूर्वमद पूर्वमिति यस्या क्रियायाम् ।

माणिशत्रुमित्रवृत्तयो निजप्रभावप्रशमितेतिमरकादिजगदुपद्रवाः। शुक्ल-ध्यानानलनिर्दग्धघातिकर्माण आविर्भूतनिखिलभावाभावस्वभावाव-भासिकेवलकलनदलितसकलजीवलोकमोहप्रसराः सुरासुरविनिर्मितां समवसरणभुवमधिष्ठाय स्वस्वभाषापरिणामिनीभिर्वाग्भिः प्रवर्तितध-र्मतीर्थाश्चतुस्त्रिंशदतिशयमयीं तीर्थकरलक्ष्मीमुपभुज्य परं ब्रह्म सततानन्दं सकलकर्मनिर्मोक्षमुपेयिवांसस्तान्मानुषत्वादिसाधारणधर्मोपदेशेनाप-वदन् सुमेरुमपि लोष्टादिना साधारणीकर्तुं पार्थिवत्वेनापवदेः। किञ्चा-नवरतवनिताङ्गसम्भोगदुर्ललितवृत्तीनां विविधहेतुसमूहधारिणाम-क्षमालाद्यायत्तमनःसंयमानां रागद्वेषमोहकलुषितानां ब्रह्मादीनां सर्व

---

१ ईति "अजन्यमीतिरुत्पात"। इति हैम २-४०। ईयते प्राप्यते दुःखमनया ईतिः। पु स्त्री। "अतिवृष्टिरनावृष्टि शलभा मूषका खगा। प्रत्यासन्नाश्च राजान षडेता ईतय स्मृता"॥ १॥

२ "मरको मार"। इति हैम २-२३९। मरणं मरकः।

३ शुचं क्लामयतीति शुक्लम्। शोकं ग्लपयतीत्यर्थः। "ध्यै चिन्तायाम्"। (है धा पा १३०) ध्यायते चिन्त्यते तत्त्वमनेनेति ध्यानम्। शुक्लं च तद् ध्यानं च शुक्लध्यानम्।

४ समवसरन्ति नाना परिणामा जीवा कथञ्चिदनुच्छतया यस्मिन् तत्समवसरणम्।

५ अतिशया ३४ तेषु च देहोऽद्भुतरूपगन्धो निरामयः स्वेदमलोज्झितश्च। श्वासोऽब्जगन्धो रुधिरामिषं तु गोक्षीरधाराधवलं ह्यविस्रम्॥ १॥ आहारनीहारविधिस्त्वदृश्य (अदृश्य मांसचक्षुषा न पुनरवध्यादिलोचनेन पुंसा) चत्वार एतेऽतिशया सहोत्था (सहजन्मान)।

अथ कर्मक्षयजानतिशयानाह—क्षेत्रे स्थितिर्योजनमात्रकेऽपि नृदेवतिर्यग्जनकोटिकोटेः॥ २॥ वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च। भामण्डलं चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रि॥ ३॥ साग्रे च गव्यूतिशतद्वये रुजा वैरेतयो मार्यतिवृष्ट्यवृष्ट्य। दुर्भिक्षमन्यस्वकचक्रतो भयं स्यान्नैत एकादश कर्मघातजाः॥ ४॥

अथ देवकृतानतिशयानाह—खे धर्मचक्रं चमराः सपादपीठं मृगेन्द्रासनमुज्ज्वलं च

विश्वसाम्राज्यम् । यदवदाम स्तुतौ "*मदेन मानेन मनोभवेन क्रोधेन लोभेन च सम्मदेन । पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ।" इति । अथापि रागादिदोषकालुष्याविरहिताः सततज्ञानानन्दमयमूर्तयो ब्रह्मादयस्तर्हि तादृशेषु तेषु न

---

छत्रत्रय[4] रत्नमयध्वजो[5]ऽङ्घ्रिन्यासे च चामीकरपङ्कजानि[6] ॥ ५ ॥ वप्रत्रयं[7] चारु चतुर्मुखा[8]ङ्गता चैत्यद्रुमो[9]ऽधोवदनाश्च[10] कण्टकाः । द्रुमानति[11]र्दुन्दुभिनाद[12] उच्चैर्वातोऽनुकूल[13] शकुनाः प्रदक्षिणाः[14] ॥ ६ ॥ गन्धाम्बुवर्षं[15] बहुवर्णपुष्पवृष्टि[16] कचश्मश्रुनखाप्रवृद्धि[17] । चतुर्विधामर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे[1] ॥ ७ ॥ ऋतूनामिन्द्रियार्थानामनुकूल[15]त्वमित्यमी । एकोनविंशतिर्दैव्याश्चतुस्त्रिंशच्च मीलिताः[1] ॥ ८ ॥

---

१ योजनप्रमाणेऽपि क्षेत्रे समवसरणभुवि समवसरन्ति नाना परिणामा जीवा कथञ्चिदुच्छतया यस्मिन् तत्समवसरण नृणा देवाना तिरश्चा च जनाना कोटिकोटि सङ्ख्याना स्थितिरवस्थानम् । २ वाणी भाषा अर्द्धमागधी ( मागधी इत्यपि दृश्यते ) नृतिर्यक्सुरलोकभाषया सवदति ३ योजनशते ज्वरादिरोगो न स्यात् । ४ एवमेकादश अतिशया ज्ञानावरण[1]दर्शनावरण[2]मोहनीया[3]न्तराया[4]ख्यकर्मचतुष्टयस्य क्षयाज्जायन्ते । ५ धर्मप्रकाशक चक्रम् । ६, ७, ८, ९ ए इति वर्तते । १० समवसरणे रत्नसुवर्णरूप्यमय प्राकारत्रय मनोज्ञ भवति । ११ चैत्याभिधानो द्रुमोऽशोकवृक्ष स्यात् । १२ सुरनद स्यादनुकूल । १३ बहुवर्णाना पञ्चवर्णाना जानुनोत्सधस्य उच्चत्वस्य यत्प्रमाण यस्या सा जानूत्सेधप्रमाणमात्रा पुष्पवृष्टि स्यात् । १४ भवनपतिव्यन्तरज्योतिष्कवैमानिक देवा प्रशान्ताविभ्रमालसा प्रशान्तानि समङ्कृतानि चित्राणि रागद्वेषाद्यनेकविध विकारयुक्ततया विविधानि मानसान्यन्त करणानि येषा ते समीपे धर्म निशामयन्ति । १५ ऋतूना वसन्तादीना सर्वदा पुष्पादिसामग्रीभिरिन्द्रियार्थाना स्पर्शरसगन्धरूपशब्दाना ममनोज्ञानापकर्षेण मनोज्ञाना च प्रादुर्भावेनानुकूल्य भवति । १६ इति देवै कृता एकोनविंशतिस्तीर्थकृतामतिशया । १७ एकोनविंशति सहजैश्चतुर्भि कर्मक्षयजैरेकादशभि सह मीलिता एकत्र योजिताश्चतुस्त्रिंशद्भवन्तीति ।

* श्रीहेमचन्द्राचार्यकृतायोगव्यवच्छेदद्वात्रिंशिका श्लोक २५ ।

विप्रतिपद्यामहे। अवोचाम हि "यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया। वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते"[१] ॥ इति। केवलं ब्रह्मादिदेवताविषयाणां श्रुतिस्मृतिपुराणेतिहासकथानां वैतथ्यमासज्येत ॥ १६ ॥

तदेवं साधकेभ्यः प्रमाणेभ्योऽतीन्द्रियज्ञानसिद्धिरुक्ता बाधकाभावाच्च सुनिश्चिता—

## ॥ असम्भवद्बाधकत्वात् सुखादिवत् ॥ १–१–१७ ॥

तत्सिद्धिरिति सम्बध्यते। तथाहि केवलज्ञानबाधकं भवत् प्रत्यक्षं वा भवेत् प्रमाणान्तरं वा। न तावत् प्रत्यक्षम्। तस्य विधाने एवाधिकारात्। "संबद्धं वर्तमानं च गृह्यते चक्षुरादिना।"[२] इति स्वयमेव भाषणात्। अथ न प्रवर्तमानं प्रत्यक्षं तद्बाधकं किन्तु निवर्तमानम्। तद्धि यदि नियतदेशकालविषयत्वेन बाधकं तर्हि सम्प्रतिपद्यामहे। अथ सकलदेशकालविषयत्वेन, तर्हि न तत् सकलदेशकालपुरुषपरिषत्साक्षात्करणमन्तरेण सम्भवतीति सिद्धं नः समीहितम्। न च जैमिनिरन्यो वा सकलदेशादिसाक्षात्कारी सम्भवति। सत्त्वपुरुषत्वादेः रथ्यापुरुषवत्। अथ प्रज्ञायाः सातिशयत्वात्तत्प्रकर्षोऽप्यनुमीयते। तर्हि तत एव सकलार्थदर्शी किं नानुमीयते। स्वपक्षे चानुपलम्भमप्रमाणयन् सर्वज्ञाभावे कुतः प्रमाणयेदविशेषात्। न चानुमानं तद्बाधकं सम्भवति। धर्मिग्रहणमन्तरेणानुमानाप्रवृत्तेः। धर्म्मिग्रहणे वा तद्ग्राहकप्रमाणबाधितत्वादनुत्थानमेवानुमानस्य। अथ विवादाध्यासितः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् पुरुषत्वाद्वा रथ्यापुरुषवदित्य-

१ श्रीहेमचन्द्राचार्यकृतायोगव्यवच्छेदद्वात्रिंशिका श्लोक ३१।

२ श्लोकवार्तिक सू॰ ४ श्लोक ८४।

नुमानं तद्बाधकं ब्रूषे। तदसत्। यतो यदि प्रमाणपरिदृष्टार्थवक्तृत्वमात्रं हेतुस्तदा विरुद्धः। तादृशस्य वक्तृत्वस्य सर्वज्ञ एव भावात्। अथासद्भूतार्थवक्तृत्वं तदा सिद्धसाध्यता। प्रमाणविरुद्धार्थवादिनामसर्वज्ञत्वेनेष्टत्वात्। वक्तृत्वमात्रं तु सन्दिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिकम्। ज्ञानप्रकर्षे वक्तृत्वापकर्षादर्शनात्। प्रत्युत ज्ञानातिशयवतो वक्तृत्वातिशयस्यैवोपलब्धेः। एतेन पुरुषत्वमपि निरस्तम्। पुरुषत्वं हि यदि रागाद्यदूषितं तदा विरुद्धम्। ज्ञानवैराग्यादिगुणयुक्तपुरुषत्वस्य सर्वज्ञतामन्तरेणानुपपत्तेः। रागादिदूषिते तु पुरुषत्वे सिद्धसाध्यता। पुरुषत्वसामान्यं तु सान्दिग्धविपक्षव्यावृत्तिकमित्यबाधकम्। नाप्यागमस्तद्बाधकः। तस्यापौरुषेयस्यासम्भवात्। सम्भवे वा तद्बाधकस्य तस्यादर्शनात् सर्वज्ञोपज्ञश्चागमः कथं तद्बाधक इत्यलमतिप्रसङ्गेनेति ॥ १७ ॥

न केवलं केवलमेव मुख्यं प्रत्यक्षमपि त्वन्यदपीत्याह—

## ॥ तत्तारतम्येऽवधिमनःपर्यायौ च ॥ १-१-१८ ॥

सर्वथावरणविलये केवलं तस्यावरणविलयस्य तारतम्ये आवरणक्षयोपशमविशेषे तन्निमित्तकोऽवधिरवधिज्ञानं मनःपर्यायो मनःपर्यायज्ञानं च मुख्यमिन्द्रियानपेक्षं प्रत्यक्षम्। तत्रावधीयत इत्यवधिः मर्यादा सा च "रूपिष्ववधेः" इति वचनात् रूपवद्द्रव्यविषया अवध्युपलक्षितं ज्ञानमप्यवधिः ॥ १८ ॥

## ॥ स द्वेधा भवप्रत्ययो गुणप्रत्ययश्च ॥ १-१-१९ ॥

तत्राद्यो देवनारकाणां पक्षिणामिव वियद्गमनम्। गुणप्रत्ययो

१ "उपज्ञाते" इति हेमसूत्रम् ६-३-१९१। बृहद्वृत्ति –तेनेति वर्तते। प्रथमतः उपदेशेन विना वा ज्ञात उपज्ञात, प्रथमतः कृत चोपज्ञातम्। तस्मिन्नर्थे तृतीयान्तात्प्राग्जितीयः प्रत्ययो भवति। पाणिनेन पाणिनिना चोपज्ञात पाणिनीयम्।

२ तत्त्वार्थाधिगमसूत्रस्य प्रथमाध्याये सूत्रम् २८।

मनुष्याणां तिरश्चां च । मनसो द्रव्यरूपस्य पर्यायाश्चिन्तनानुगुणाः परिणामभेदास्तद्विषयं ज्ञानं मनःपर्यायः । तथाविधमनःपर्यायान्यथानुपपत्त्या तु यद्बाह्यचिन्तनीयार्थज्ञानं तदानुमानिकमेव न मनःपर्यायप्रत्यक्षम् । यदाहुः 'जाणइ बज्झे णुमाणा उ त्ति ' ॥१९॥

ननु रूपिद्रव्यविषयत्वे क्षायोपशमिकत्वे च तुल्ये को विशेषोऽवधिमनःपर्याययोरित्याह—

## ॥ विशुद्धिक्षेत्रस्वामिविषयभेदात्तद्भेदः ॥ १-१-२० ॥

सत्यपि कथञ्चित्साधर्म्ये विशुद्ध्यादिभेदादवधिमनःपर्यायज्ञानयोर्भेदः । तत्रावधिज्ञानान्मनःपर्यायज्ञानं विशुद्धतरम् । यानि हि मनोद्रव्याणि अवधिज्ञानी जानीते तानि मनःपर्यायज्ञानी विशुद्धतराणि जानीते । क्षेत्रकृतश्चानयोर्भेदः । अवधिज्ञानमङ्गुलस्यासङ्ख्येयभागादिषु भवत्यासर्वलोकात् । मनःपर्यायज्ञानं तु मनुष्यक्षेत्र एव भवति । स्वामिकृतोऽपि, अवधिज्ञानं संयतस्यासंयतस्य संयतासंयतस्य च सर्वगतिषु भवति। मनःपर्यायज्ञानं तु मनुष्यसंयतस्य प्रकृष्टचारित्रस्य प्रमत्तादिषु क्षीणकषायान्तेषु गुणस्थानकेषु भवति । तत्रापि वर्धमानपरिणामस्य नेतरस्य । वर्धमानपरिणामस्यापि ऋद्धिप्राप्तस्य नेतरस्य। ऋद्धिप्राप्तस्यापि कस्यचिन्न सर्वस्येति । विषयकृतश्च रूपवद्द्रव्येष्वसर्वपर्यायेष्ववधेर्विषयनिबन्धस्तदनन्तभागे मनःपर्यायस्येति ॥ २०॥

अवसितं मुख्यं प्रत्यक्षम् । अथ सांव्यवहारिकमाह—

## ॥ इन्द्रियमनोनिमित्तोऽवग्रहेहावायधारणात्मा सांव्यवहारिकम् ॥ १-१-२१ ॥

इन्द्रियाणि स्पर्शनादीनि वक्ष्यमाणलक्षणानि । मनश्च निमित्तं

१ अत्र ' जाणई बज्झेणुमाणेणम् ' इति पाठः । छाया—जनाति बाह्यानुमानेन । विशेषावश्यके गाथा ८१४ ।

* १-१-२२ सूत्रे ।

कारणं यस्य स तथा । सामान्यलक्षणानुवृत्तेः। सम्यगर्थनिर्णयस्येदं विशेषणं तेनेन्द्रियमनोनिमित्तः सम्यगर्थनिर्णयः। कारणमुक्त्वा स्वरूपमाह—अवग्रहेहावायधारणात्मा । अवग्रहादयो वक्ष्यमाण-लक्षणाः । त आत्मा यस्य सोऽवग्रहेहावायधारणात्मा । आत्मग्रहणं च क्रमेणोत्पद्यमानानामप्यवग्रहादीनां नात्यन्तिको भेदः किन्तु पूर्वपूर्वस्योत्तरोत्तररूपतया परिणामादेकात्मकत्वमिति प्रदर्शनार्थम् । समीचीनः प्रवृत्तिनिवृत्तिरूपो व्यवहारः संव्यवहारस्तत्प्रयोजनं सांव्य-वहारिकम् । प्रत्यक्षम् इन्द्रियमनोनिमित्तं च समस्तं व्यस्तं च बोद्धव्यम् इन्द्रियप्राधान्यान्मनोबलाधानाच्चोत्पद्यमान इन्द्रियजो मनस एव विशुद्धिसव्यपेक्षादुपजायमानो मनोनिमित्त इति । ननु स्वसंवेदनरूपमन्यदपि प्रत्यक्षमस्ति तत्कस्मान्नोक्तमिति न वाच्यम् । इन्द्रियजज्ञानस्वसंवेदनस्येन्द्रियप्रत्यक्षेऽनिन्द्रियजसुखादिस्वसंवेदनस्य मनःप्रत्यक्षे योगिप्रत्यक्षस्वसंवेदनस्य योगिप्रत्यक्षेऽन्तर्भावात् । स्मृत्यादिस्वसंवेदनं तु मानसमेवेति नापरं स्वसंवेदनं नाम प्रत्यक्ष-मस्तीति भेदेनोक्तम् ॥ २१ ॥

इन्द्रियेत्युक्तमितीन्द्रियाणि लक्षयति—

**॥ स्पर्शरसगन्धरूपशब्दग्रहणलक्षणानि स्पर्शनरसनघ्राण-चक्षुःश्रोत्राणीन्द्रियाणि द्रव्यभावभेदानि ॥ १-१-२२ ॥**

स्पर्शादिग्रहणं लक्षणं येषां तानि यथासङ्ख्यं स्पर्शनादीनीन्द्रि-याणि । तथाहि स्पर्शाद्युपलब्धिः करणपूर्वा क्रियात्वात् छिदिक्रि-यावत् । तन्नेन्द्रेण कर्मणा सृष्टानीन्द्रियाणि । नामकर्मोदयनिमित्त-त्वात् इन्द्रस्यात्मनो लिङ्गानि वा । कर्ममलीमसस्य हि स्वयमर्थानु-पलब्धुमसमर्थस्यात्मनोऽर्थोपलब्धौ निमित्तानि इन्द्रियाणि । नन्वेव-मात्मनोऽर्थज्ञानमिन्द्रियात् लिङ्गादुपजायमानमनुमानिकं स्यात् ।

* १-१-२३, १-१-२८, १-१-२९, १-१-३० सूत्रेषु ।

तथा च लिङ्गापरिज्ञानेऽनुमानानुदयात् तस्यानुमानात्परिज्ञानेऽनवस्थाप्रसङ्गः । नैवम् । भावेन्द्रियस्वसंविदितत्वेनानवस्थानवकाशात् । यद्वेन्द्रस्यात्मनो लिङ्गान्यात्मगमकानीन्द्रियाणि करणस्य वास्यादिवत्कर्त्रधिष्ठितत्वदर्शनात् । तानि च द्रव्यभावरूपेण भिद्यन्ते । तत्र द्रव्येन्द्रियाणि नामकर्मोदयनिमित्तानि । भावेन्द्रियाणि पुनस्तदावरणवीर्यान्तरायक्षयोपशमनिमित्तानि । सैषा पञ्चसूत्री स्पर्शग्रहणलक्षणं स्पर्शनेन्द्रियं, रसग्रहणलक्षणं रसनेन्द्रियमित्यादि । सकलसंसारिषु भावाच्छरीरव्यापकत्वाच्च स्पर्शनस्य पूर्वं निर्देशः । ततः क्रमेणाल्पाल्पजीवविषयत्वाद्रसनघ्राणचक्षुःश्रोत्राणाम् । तत्र स्पर्शनेन्द्रियं तदावरणक्षयोपशमसम्भवं पृथिव्यप्तेजोवायुवनस्पतीनां शेषेन्द्रियावरणवतां स्थावराणां जीवानाम् । तेषां च "[1] पुढवि चित्तमन्तमक्खाया " इत्यादेराप्तागमात्सिद्धिः । अनुमानाच्च ज्ञानं क्वचिदात्मनि परमापकर्षवत् अपकृष्यमाणविशेषत्वात् परिमाणवत् । यत्र तदपकर्षपर्यन्तस्त एकेन्द्रियाः स्थावराः । न च स्पर्शनेन्द्रियस्याप्यभावे भस्मादिषु ज्ञानस्यापकर्षो युक्तः । तत्र हि ज्ञानस्याभाव एव न पुनरपकर्षस्ततो यथा गगनपरिमाणादारभ्यापकृष्यमाणविशेषं परिमाणं परमाणौ परमापकर्षवत् । तथा ज्ञानमपि केवलज्ञानादारभ्यापकृष्यमाणविशेषमेकेन्द्रियेष्वत्यन्तमपकृष्यते । पृथिव्यादीनां च प्रत्येकं जीवत्वसिद्धिरग्रे वक्ष्यते । स्पर्शनरसनेन्द्रिये कृमि–अपादिकानूपुरक–गण्डूपद–शङ्ख–शुक्तिका–शम्बूका–जलौकाप्रभृतीनां

---

[1] दशवैकालिकस्य चतुर्थाध्ययने प्रथमसूत्रम् । छाया—पृथिवी । चित्त जीवलक्षणं तदस्यास्तीति चित्तवती सजीवेत्यर्थः । पाठान्तरं वा "पुढवि चित्तमन्तमक्खाया" । अत्र मन्तशब्दः स्तोकवाची । यथा सर्षपत्रिभागमन्त्रं मन्तं । स्तोकमात्रा स्तोकचित्ते त्यर्थः । अन्येषां सर्वेण कथिता ।

[2] इयं जीवविशेषसिद्धिरस्मत्पाठे नास्ति तदग्रे स्यात् ।

त्रसानाम्। स्पर्शन-रसन-घ्राणानि पिपीलका-रोहिणिका-पोचिका-कुंथु-तुंबुरक-त्रिपुस-बीज-कर्पासास्थिका-शतपदी-अयेनक-तृणपत्र-काष्ठहारकादीनाम्। स्पर्शन-रसन-घ्राण-चक्षूंषि भ्रमर-वटर-सारङ्ग-माक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावर्त्त-कीटक-पतङ्गादीनाम्। सह श्रोत्रेण तानि। मत्स्य-उरग भुजग-पक्षि-चतुष्पदानां तिर्यग्योनिजानां सर्वेषां च नारकमनुष्य-देवानामिति। ननु वचनादानविहरणोत्सर्गानन्दहेतूनि वाक्पाणिपाद-पायूपस्थलक्षणान्यपीन्द्रियाणीति साङ्ख्यास्तत्कथं पञ्चैवेन्द्रियाणि। न। ज्ञानविशेषहेतूनामेवेहेन्द्रियत्वेनाधिकृतत्वात् चेष्टाविशेषनिमित्त-त्वेनेन्द्रियत्वकल्पनायामिन्द्रियानन्त्यप्रसङ्गश्चेष्टाविशेषाणामनन्तत्वात्। तस्माद्व्यक्तिनिर्देशात् पञ्चेन्द्रियाणि। तेषां च परस्परं स्यादभेदो द्रव्यार्थादेशात्। स्याद्भेदः पर्यायार्थादेशात्। अभेदैकान्ते हि स्पर्श-नेन स्पर्शस्येव रसादेरपि ग्रहणप्रसङ्गः। तथाचेन्द्रियान्तरकल्पनावैय-र्थ्यम्। कस्यचित् साकल्ये वैकल्ये वान्येषां साकल्यवैकल्यप्रसङ्गश्च। भेदैकान्तेऽपि तेषामेकत्र सकलज्ञानजनकत्वाभावप्रसङ्गः। सन्तानान्तरे-न्द्रियवत्। मनस्तस्य जनकमिति चेत्। न। तस्येन्द्रियनिरपेक्षस्य तज्जनकत्वाभावात्। इन्द्रियापेक्षं मनोऽनुसन्धानस्य जनकमिति चेत्। सन्तानान्तरेन्द्रियापेक्षस्य कुतो न जनकत्वमिति वाच्यम्। प्रत्यास-त्तेरभावादिति चेत्। अत्र का प्रत्यासत्तिरन्यत्रैकद्रव्यतादात्म्यात्। प्रत्यासत्त्यन्तरस्य च व्यभिचारादिति। एतेन तेषामात्मना भेदाभे-दैकान्तौ प्रतिव्यूढौ। आत्मना करणानामभेदैकान्ते कर्तृत्वप्रसङ्गः। आत्मनो वा करणत्वप्रसङ्गः। उभयोरुभयात्मकप्रसङ्गो वा विशेषा-भावात्। ततस्तेषां भेदैकान्ते चात्मनः करणत्वाभावः सन्तानान्तर-करणवद्विपर्ययो वेति प्रतीतिसिद्धत्वाद्बाधकाभावाच्चानेकान्त एवाश्र-

१ त्रसन्ति उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसाः द्वीन्द्रियादयश्च।

यणीयः। द्रव्येन्द्रियाणामपि परस्परं स्वारम्भकपुद्गलद्रव्येभ्यश्च भेदाभेदद्वारानेकान्त एव युक्तः। पुद्गलद्रव्यार्थादेशादभेदस्य पर्यायार्थादेशाच्च भेदस्योपपद्यमानत्वात्। एवमिन्द्रियविषयाणां स्पर्शादीनामपि द्रव्यपर्यायरूपतया भेदाभेदात्मकत्वमवसेयम्। तथैव निर्बाधमुपलब्धेः। तथा च द्रव्यमात्रं पर्यायमात्रं चेन्द्रियविषय इति स्पर्शादीनां कर्मसाधनत्वं भावसाधनत्वं च द्रष्टव्यम्॥ २२॥

द्रव्यभावभेदानीत्युक्तं तानि क्रमेण लक्षयति–

## ॥ द्रव्येन्द्रियं नियताकाराः पुद्गलाः ॥ १-१-२३॥

द्रव्येन्द्रियमित्येकवचनं जात्याश्रयणात्। नियतो विशिष्टो बाह्य आभ्यन्तरश्चाकारः संस्थानविशेषो येषां ते नियताकाराः पूरणगलनधर्माणः स्पर्शरसगन्धवर्णवन्तः पुद्गलाः। तथाहि श्रोत्रादिषु यः कर्णशष्कुलीप्रभृतिर्बाह्यः पुद्गलानां प्रचयो यश्चाभ्यन्तरः कदम्बगोलकाद्याकारः स सर्वो द्रव्येन्द्रियम्। पुद्गलद्रव्यरूपत्वात्। अप्रधान्ये वा द्रव्यशब्दो यथाङ्गारमर्दको द्रव्याचार्य इति। अप्रधानमिन्द्रियं द्रव्येन्द्रियं व्यापारवत्यपि तस्मिन् सन्निहितेऽपि चालोकप्रभृतीनि सहकारिपटले भावेन्द्रियं विना स्पर्शाद्युपलब्ध्यसिद्धेः॥२३॥

## ॥ भावेन्द्रियं लब्ध्युपयोगौ ॥ १-१-२४ ॥

लम्भनं लब्धिर्ज्ञानावरणकर्मक्षयोपशमविशेषः। यत्सन्निधानादात्मा द्रव्येन्द्रियनिर्वृत्तिं प्रति व्याप्रियते तन्निमित्त आत्मनः परिणामविशेष उपयोगः। अत्रापि भावेन्द्रियमित्येकवचनं जात्याश्रयणात्। भावशब्दोऽनुपसर्जनार्थः[१]। यथेन्द्रनधर्मयोगित्वेनानुपचरितेन्द्रत्वो भावेन्द्र उच्यते। तथेन्द्रलिङ्गत्वादिधर्मयोगेनानुपचरितेन्द्रलिङ्गत्वादिधर्मयोगि भावेन्द्रियम्। तत्र लब्धिस्वभावं तावदिन्द्रियं स्वार्थसंवित्तावात्मनो योग्यतामादधद्भावेन्द्रियतां प्रतिपद्यते।

---

१ प्रधानार्थं।

नहि तत्रायोग्यस्य तदुत्पत्तिराकाशवदुपपद्यते स्वार्थसंविद्योग्यतैव च लब्धिरिति । उपयोगस्वभावं पुनः स्वार्थसंविदि व्यापारात्मकम् । नह्यव्यापृतं स्पर्शनादिसंवेदनं स्पर्शादि प्रकाशयितुं शक्तम् । सुषुप्तादीनामपि तत्प्रकाशकत्वप्राप्तेः । स्वार्थप्रकाशने व्यापृतस्य संवेदनस्योपयोगत्वे फलत्वादिन्द्रियत्वानुपपत्तिरिति चेत् । न । कारणधर्मस्य कार्येऽनुवृत्तेः । नहि पावकस्य प्रकाशकत्वे तत्कार्यस्य प्रदीपस्य प्रकाशकत्वं विरुध्यते । न च येनैव स्वभावेनोपयोगस्येन्द्रियत्वं तेनैव फलत्वमिष्यते येन विरोधः स्यात् । साधकतमस्वभावेन हि तस्येन्द्रियत्वं क्रियारूपतया च फलत्वम् । यथैव हि प्रदीपः प्रकाशात्मा करणम् । क्रियात्मा फलम् । स्वतन्त्रत्वाच्च कर्त्तेति सर्वमिदमनेकान्तवादे न दुर्लभमित्यलं प्रसङ्गेन ॥ २४ ॥

मनोनिमित्त इत्युक्तमिति मनो लक्षयति—

## ॥ सर्वार्थग्रहणं मनः ॥ १-१-२५ ॥

सर्वे न तु स्पर्शनादीनां स्पर्शादिवत् प्रतिनियता एवार्था गृह्यन्ते तेनेति सर्वार्थग्रहणं 'मनोऽनिन्द्रियम्' इति ' नो इन्द्रियम्' इति चोच्यते । सर्वार्थं मन इत्युच्यमाने आत्मन्यपि प्रसङ्ग इति करणत्वप्रतिपादनार्थं ग्रहणमित्युक्तम् । आत्मा तु कर्त्तेति नातिव्याप्तिः सर्वार्थग्रहणं च मनसः प्रसिद्धमेव । यद्वाचकमुख्यः " श्रुतमनिन्द्रियस्य "[1] श्रुतमिति हि विषयिणा विषयस्य निर्देशः । उपलक्षणं च श्रुतं मतेः । तेन मतिश्रुतयोर्यो विषयः । स मनसो विषय इत्यर्थः । ' मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु '[2] इति वाचकवचनान्मतिश्रुतज्ञानयोः सर्वविषयत्वं सिद्धम् । मनोऽपि चेन्द्रियवद् द्रव्यभावभेदात् द्विविधमेव । तत्र द्रव्यमनो मनस्त्वेन परिणतानि

---

१ तत्त्वार्थाधिगमसूत्र २-२२ ।

२ तत्त्वार्थाधिगमसूत्र १-२७ ।

पुद्गलद्रव्याणि। भावमनस्तु तदावरणीयकर्मक्षयोपशमात्मा लब्धिरात्मनश्चार्थग्रहणोन्मुखो व्यापारविशेष इति ॥ २५ ॥

नन्वल्पमिदमुच्यते ' **इन्द्रियमनोनिमित्त** ' इति। अन्यदपि हि चक्षुर्ज्ञानस्य निमित्तमर्थ आलोकश्चास्ति। यदाहुः " **रूपालोकमनस्कारचक्षुर्भ्यः सम्प्रजायते। विज्ञानं मणिसूर्यांशुगोशकृद्भ्य इवानलः ॥** " इत्यत्राह—

**॥ नार्थालोकौ ज्ञानस्य निमित्तमव्यतिरेकात् ॥१-१-२६॥**

बाह्यो विषयः प्रकाशश्च न चक्षुर्ज्ञानस्य साक्षात्कारणम्। देशकालादिवत्तु व्यवहितकारणत्वं न निवार्यते। ज्ञानावरणादिक्षयोपशमसामग्र्यामारादुपकारित्वेनाञ्जनादिवच्चक्षुरुपकारित्वेन चाभ्युपगमात्। कुतः पुनः साक्षान्न कारणत्वमित्याह—अव्यतिरेकात् व्यतिरेकाभावात्। नहि तद्भावे भावलक्षणोऽन्वय एव हेतुफलभावनिश्चयनिमित्तम्। अपि तु तदभावेऽभावलक्षणो व्यतिरेकोऽपि। न चासावर्थालोकयोर्हेतुभावेऽस्ति। मरुमरीचिकादौ जलाभावेऽपि जलज्ञानस्य वृषदंशादीनां चालोकाभावेऽपि सान्द्रतमतमःपटलविलुप्तदेशगतवस्तुप्रतिपत्तेश्च दर्शनात्। योगिनां चातीतानागतार्थग्रहणे किमर्थस्य निमित्तत्वम्। निमित्तत्वे चार्थक्रियाकारित्वेन सत्त्वादतीतानागतत्वक्षतिः। न च प्रकाश्यादात्मलाभ एव प्रकाशकस्य। प्रकाशकत्वं प्रदीपादेर्घटादिभ्योऽनुत्पन्नस्यापि तत्प्रकाशकत्वदर्शनात्। ईश्वरज्ञानस्य च नित्यत्वेनाभ्युपगतस्य कथमर्थजन्यत्वं नाम। अस्मदादीनामपि जनकस्यैव ग्राह्यत्वाभ्युपगमे स्मृतिप्रत्यभिज्ञानादेः प्रमाणस्याप्रामाण्यप्रसङ्गः। येषां चैकान्तक्षणिकोऽर्थो जनकश्च ग्राह्य इत्येतद् दर्शनम्। तेषामपि जन्यजनकयोर्ज्ञानार्थयोर्भिन्नकालत्वान्न ग्राह्यग्राहकभावः सम्भवति। अथ न जन्यजनकभावातिरिक्तं

१ " भित्ति " इति पाठान्तरम्।

सन्दंशायोगोलकवत् ज्ञानार्थयोः कश्चिद् ग्राह्यग्राहकभाव इति मतम् । "भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् । इति वचनात् । तर्हि सर्वज्ञज्ञानस्य वार्तमानिकार्थविषयत्वं न कथंचिदुपपद्यते । वार्तमानिकक्षणस्याजनकत्वात् । अजनकस्य चाग्रहणात् । स्वसंवेदनस्य च स्वरूपाजन्यत्वे कथं ग्राहकत्वं स्वरूपस्य वा कथं ग्राह्यत्वमिति चिन्त्यम् । तस्मात् स्वसामग्रीप्रभवयोः प्रकाशघटयोरिव ज्ञानार्थयोः प्रकाश्यप्रकाशकभावसम्भवान्न ज्ञाननिमित्तत्वमर्थालोकयोरिति स्थितम् । नन्वर्थाजन्यत्वे ज्ञानस्य कथं प्रतिकर्मव्यवस्था । तदुत्पत्तितदाकारताभ्यां हि सोपपद्यते । तस्मादनुत्पन्नस्यातदाकारस्य च ज्ञानस्य सर्वान् प्रत्यविशेषात् । नैवम् । तदुत्पत्तिमन्तरेणाप्यावरणक्षयोपशमलक्षणयोग्यतयेव प्रतिनियतार्थप्रकाशकत्वोपपत्तेः । तदुत्पत्तावपि च योग्यतावश्याश्रयणीया । अन्यथाशेषार्थसान्निध्येऽपि कुतश्चिदेवार्थात् कस्यचिदेव ज्ञानस्य जन्मेति कौतस्कुतोऽयं विभागः । तदाकारता त्वर्थाकारसङ्क्रान्त्या तावदनुपपन्ना । अर्थस्य निराकारत्वप्रसङ्गात् । अर्थेन च मूर्तेनामूर्तस्य ज्ञानस्य कीदृशं सादृश्यमित्यर्थविशेषग्रहणपरिणाम एव साभ्युपेया । ततः– "अर्थेन घटयत्येनां नहि मुक्त्वाऽर्थरूपताम् ।" इति यत्किञ्चिदेतत् । अपि च व्यस्ते समस्ते चैते ग्रहणकारणं स्याताम् । यदि व्यस्ते तदा कपालाद्यक्षणो घटान्त्यक्षणस्य जलचन्द्रो वा नभश्चन्द्रस्य ग्राहकः प्राप्नोति । तदुत्पत्तेस्तदाकारत्वाच्च । अथ समस्ते तर्हि घटोत्तरक्षणः पूर्वघटक्षणस्य ग्राहकः प्रसज्जति । ज्ञानरूपत्वे सत्येते ग्रहणकारणमिति चेत् । तर्हि समानजातीयज्ञानस्य समनन्तरपूर्वज्ञानग्राहकत्वं प्रसज्येत । तन्न योग्यतामन्तरेणान्यद् ग्रहणकारणं पश्यामः ॥२६॥

१ सन्दंश इति तप्तायोग्राहक कर्मारस्योपकरणविशेष ।

अवग्रहेहावायधारणात्मेत्युक्तमित्यवग्रहादीँल्लक्षयति–

**॥अक्षार्थयोगे दर्शनानन्तरमर्थग्रहणमवग्रहः॥१-१-२७॥**

अक्षमिन्द्रियं द्रव्यभावरूपम् अर्थो द्रव्यपर्यायात्मा तयोर्योगः सम्बन्धोऽनतिदूरासन्नव्यवहितदेशाद्यवस्थानलक्षणा योग्यता।[1] नियता हि सा विषयविषयिणोः। यदाह "पुट्ठं सुणेइ सद्दं रूवं पुण पासइ अपुट्ठं तु।" इत्यादि। तस्मिन्नक्षार्थयोगे सति दर्शनमनुल्लिखितविशेषस्य वस्तुनः प्रतिपत्तिः। तदनन्तरमिति क्रमप्रतिपादनार्थमेतत्। एतेन दर्शनस्यावग्रहं प्रति पारिणामिककारणतोक्ता। नह्यसत एव सर्वथा कस्यचिदुत्पादः, सतो वा सर्वथा विनाश इति दर्शनमेवोत्तरं परिणामं प्रतिपद्यते। अर्थस्य द्रव्यपर्यायात्मनोऽर्थक्रियाक्षमस्य ग्रहणं सम्यगर्थनिर्णय इति सामान्यलक्षणानुवृत्तेर्निर्णयो न पुनरविकल्पकं दर्शनमात्रमवग्रहः।[2] न चायं मानसो विकल्पः। चक्षुरादिसन्निधानापेक्षत्वात्। मतिसंख्यानेनामत्याख्येयत्वाच्च। मानसो हि विकल्पः प्रतिसङ्ख्यानेन निरुध्यते। न चायं तथेति न विकल्पः॥ २७॥

**॥ अवगृहीतविशेषकाङ्क्षणमीहा॥ १-१-२८॥**

अवग्रहगृहीतस्य शब्दादेरर्थस्य किमयं शब्दः शाङ्खः शार्ङ्गो[3] वेति संशये सति माधुर्यादयः शङ्खधर्मा एवोपलभ्यन्ते न कार्कश्यादयः शार्ङ्गधर्मा इत्यन्वयव्यतिरेकरूपविशेषपर्यालोचनरूपा मतिश्चेष्टेहा। इह चावग्रहेहयोरन्तराले अभ्यस्तेऽपि विषये संशयज्ञानमस्त्येव। आशुभावात्तु नोपलक्ष्यते। न तु प्रमाणम्। सम्यगर्थनिर्णयात्मक-

१ अस्या उत्तरार्द्धम्– "गंध रसं च फासं च बद्धपुट्ठं वियागरे" ॥ विशेषावश्यकगाथा। संस्कृतच्छाया–"स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टं तु। गन्धं रसं च स्पर्शं च बद्धस्पृष्टं व्यागृणीयात्॥ ३३६॥

२ १-१-२।

३ शाङ्गस्य अयम् शार्ङ्गः।

त्वाभावात् । ननु परोक्षप्रमाणभेदरूपमूहाख्यं प्रमाणं वक्ष्यते तत्कस्तस्मादीहाया भेदः[१] । उच्यते । त्रिकालगोचरः साध्यसाधनयोर्व्याप्तिग्रहणपटुरूहः । यमाश्रित्य व्याप्तिग्रहणकाले योगीव सम्पद्यते प्रमातेति न्यायविदो वदन्ति । ईहा तु वार्त्तमानिकार्थविषया प्रत्यक्षप्रभेद इत्यपौनरुक्त्यम् । ईहा च यद्यपि चेष्टोच्यते तथापि चेतनस्य सेति ज्ञानरूपैवेति युक्तं प्रत्यक्षभेदत्वमस्याः । न चानिर्णयरूपत्वादप्रमाणत्वमस्याः शङ्कनीयम् । स्वविषये निर्णयत्वात् निर्णयान्तरासादृश्ये निर्णयान्तराणामप्यनिर्णयत्वप्रसङ्गः ॥ २९ ॥

## ॥ ईहितविशेषनिर्णयोऽवायः ॥ १-१-२९ ॥

ईहाक्रोडीकृते वस्तुनि विशेषस्य शाङ्ख एवायं शब्दो न शार्ङ्ग इत्येवंरूपस्यावधारणमवायः ॥ २८ ॥

## ॥ स्मृतिहेतुर्धारणा ॥ १-१-३० ॥

स्मृतेरतीतानुसन्धानरूपाया हेतुः परिणामिकारणं संस्कार इति यावत् । सङ्ख्येयमसङ्ख्येयं वा कालं ज्ञानस्यावस्थानं धारणा । अवग्रहादयस्तु त्रय आन्तर्मौहूर्त्तिकाः[१] । संस्कारस्य च प्रत्यक्षभेदरूपत्वात् ज्ञानत्वमुन्नेयम् । न पुनर्यथाहुः परे[२]– ' ज्ञानादतिरिक्तो भावनाख्योऽयं संस्कारः ' इति । अस्य ह्यज्ञानरूपत्वे ज्ञानरूपस्मृतिजनकत्वं न स्यात् । नहि सत्ता सत्तान्तरमनुविशति । अज्ञानरूपत्वे चास्यात्मधर्मत्वं न स्यात् । चेतनधर्मस्याचेतनत्वाभावात् । नन्वविच्युतिमपि धारणामन्वशिषन् वृद्धाः । यद्भाष्यकारः "अवि-

१ मुहूर्त्त –घटिकाद्वयप्रमाणं कालविशेषः । मुहूर्त्तस्यान्तः अन्तर्मुहूर्त्तम् । इह " पारे मध्येऽग्रेऽन्तः षष्ठ्या वा " । इति हैमसूत्र ३-१-३० ॥ इति विकल्पेनान्तः–शब्दस्य प्राग् निपातो भवति ।

२ नैयायिकाः ।

३ 'अविच्चुई धारणा तस्स '॥१॥ विशेषावश्यकमूलद्वितीयगाथा। भाष्यगाथा १ ।

चइ धारणा होइ " तत्कथं स्मृतिहेतोरेव धारणात्वमसूत्रयः। सत्यम्। अस्त्यविच्युतिर्नाम धारणा। किन्तु साऽवाय एवान्तर्भूतेति न पृथगुक्ता। अवाय एव हि दीर्घदीर्घोऽविच्युतिर्धारणेत्युच्यत इति। स्मृतिहेतुत्वाद्वाऽविच्युतिर्धारणयैव सङ्गृहीता। न ह्यवायमात्रादविच्युतिविरहितात् स्मृतिर्भवति। गच्छत्तृणस्पर्शप्रायाणामवायानां परिशीलनविकलानां स्मृतिजनकत्वादर्शनात्। तस्मात् स्मृतिहेतू अविच्युतसंस्कारावनेन सङ्गृहीतावित्यदोषः। यद्यपि स्मृतिरपि धारणाभेदत्वेन सिद्धान्तेऽभिहिता तथापि परोक्षप्रमाणभेदत्वादिह नोक्तेति सर्वमवदातम्। इह च क्रमभाविनामप्यवग्रहादीनां कथञ्चिदेकत्वमवसेयम्। विरुद्धधर्माध्यासो ह्येकत्वप्रतिपत्तिपरिपन्थी। न चासौ प्रमाणप्रतिपन्नेऽर्थे प्रत्यर्थितां भजते। अनुभूयते हि खलु हर्षविषादादिविरुद्धविवर्त्ताक्रान्तमेकं चैतन्यं विरुद्धधर्म्माध्यासाच्च बिभ्यद्भिरपि कथमेकं चित्रपटीयं ज्ञानमेकानेकाकारोल्लेखशेखरमभ्युपगम्यते सौगतैः चित्रं वा रूपं नैयायिकादिभिरिति। नैयायिकस्तु 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'[1] इति प्रत्यक्षलक्षणमीक्षन्ते। अत्र च पूर्वाचार्यकृतव्याख्याविप्रुख्येन सङ्ख्यावद्भिस्त्रिलोचनवाचस्पतिप्रमुखैरयमर्थः समर्थितो यथेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षमित्येवं प्रत्यक्षलक्षणं यतः शब्दाध्याहारेण च यत्तदोर्नित्याभिसम्बन्धादुक्तविशेषणविशिष्टं ज्ञानं यतो भवति तत्तथाविधज्ञानसाधनं ज्ञानरूपमज्ञानरूपं वा प्रत्यक्षं प्रमाणमिति। अस्य च फलभूतस्य द्वयी गतिरविकल्पकं सविकल्पकं वा। तयोरुभयोरपि प्रमाणरूपत्वमभिधातुं विभागवचनमेतदव्यपदेश्यं व्यवसायात्मकमिति। तत्रोभयरूपस्यापि ज्ञानस्य प्रामाण्यमुपेक्ष्य यतः शब्दाध्याहारेे-

१ गौतमसूत्र १-१-४।

शेनाऽज्ञानरूपस्य सन्निकर्षादेः प्रामाण्यसमर्थनमयुक्तम्। कथं ह्यज्ञानरूपाः सन्निकर्षादयोऽर्थपरिच्छित्तौ साधकतमा भवन्ति। व्यभिचारात् सत्यपीन्द्रियार्थसन्निकर्षेऽर्थोपलब्धेरभावात् ज्ञाने सत्येव भावात् साधकतमं हि करणमव्यवहितफलं च तदिति। सन्निकर्षोऽपि यदि योग्यतातिरिक्तः संयोगादिसम्बन्धस्तर्हि स चक्षुषोऽर्थेन सह नास्ति। अप्राप्यकारित्वात्तस्य। दृश्यते हि काचाभ्रपटलस्फटिकादिव्यवहितस्यार्थस्य चक्षुषोपलब्धिः। अथ प्राप्यकारि चक्षुः। करणत्वाद्वास्यादिवदिति ब्रूषे। तर्ह्ययस्कान्ताकर्षणोपलेन लोहासन्निकृष्टेन व्यभिचारः। न च संयुक्तसंयोगादिसन्निकर्षस्तत्र कल्पयितुं शक्यते। अतिप्रसङ्गादिति। सौगतास्तु 'प्रत्यक्षं कल्पनापोढमभ्रान्तम्'[1] इति लक्षणमवोचन्। 'अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना तया रहितम्—तयापोढम्'[2] इति। एतच्च व्यवहारानुपयोगित्वात्प्रमाणस्य लक्षणमनुपपन्नम्। तथा ह्येतस्माद्विनिश्चित्यार्थमर्थक्रियार्थिनस्तत्समर्थेऽर्थे प्रवर्तमाना विसंवादभाजो मा भूवन्निति प्रमाणस्य लक्षणपरीक्षायां प्रवर्तन्ते परीक्षकाः। व्यवहारानुपयोगिनश्च तस्य वायसदन्तदशनपरीक्षायामिव निष्फलः परिश्रमः[3] निर्विकल्पोत्तरकालभाविनः सविकल्पकात्तु व्यवहारोपगमे वरं तस्यैव प्रामाण्यमास्थेयं किमविकल्पकेन शिखण्डिनेति[4]। जैमिनीयास्तु धर्म्मं प्रति अनिमित्तत्वव्याजेन "सत्सम्प्रयोगे पुरुष-

१ न्यायबिन्दु प्रथम परिच्छेदे सूत्र ४

२ न्यायबिन्दु प्रथम परिच्छेदे सूत्र ५.

३ प्रतत्प्रमाणम्—काकस्य कति वा दन्ता मेषस्याण्ड कियत्पलम्। गर्दभे कति रोमाणीत्येषा मूर्खविचारणा॥ १॥

४ शिखण्डिन्—स्वयंवरे वृतेन भीष्मेणापाकृता काचिदम्बानाम्नी राजकन्या तपसा पुरुषत्वं प्राप्ता। सैव शिखण्डीति समाख्या लेभे। स च क्लीबत्वात् अपमानास्पदम्। ततो भारते युद्धे तं पुरस्कृत्यार्जुनो भीष्मं जघान। सोऽपि च शिखण्डी पश्चादश्वत्थाम्ना हतः।

५ मीमांसादर्शन १-१-४.

स्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ।" इत्यनुवादभङ्ग्या प्रत्यक्षलक्षणमाचक्षते । यदाहुः "एवं सत्यनुवादत्वं लक्षणस्यापि सम्भवेत् ।" इति । व्याचक्षते च–इन्द्रियाणां सम्प्रयोगे सति पुरुषस्य जायमाना बुद्धिः प्रत्यक्षमिति । अत्र संशयविपर्ययबुद्धिजन्मनोऽपीन्द्रियसंयोगे सति प्रत्यक्षत्वप्रसङ्गादतिव्याप्तिः । अथ सत्सम्प्रयोग इति । सता सम्प्रयोग इति व्याख्यायते तर्हि निरालम्बनविभ्रमा एवार्थनिरपेक्षजन्मानो निरस्ता भवेयुर्न सालम्बनौ संशयविपर्ययौ । अथ सति सम्प्रयोग इति सत्सप्तमी पक्ष एव न त्यज्यते संशयविपर्ययनिरासाय च सम्प्रयोग इत्यत्र समित्युपसर्गो वर्ण्यते । यदाह "सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः । दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ॥" इति । तथापि प्रयोगसम्यक्त्वस्यातीन्द्रियत्वेन प्रत्यक्षानवगम्यत्वात्कार्यतोऽवगतिर्वक्तव्या । कार्यं च ज्ञानम् । न च तदविशेषितमेव प्रयोगसम्यक्त्वावगमनायालम् । न च तद्विशेषणपरमपरमिह पदमस्ति सतां सम्प्रयोग इति च वरं निरालम्बनविज्ञाननिवृत्तये सतीति तु सप्तम्यैव गतार्थत्वादनर्थकम् । येऽपि "तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षं यद्विषयं ज्ञानं तेन सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षं यदन्यविषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षम् ।"

---

१ श्लोकवार्तिकसूत्र ४ श्लोक ३९ पूर्वार्धम् ।
२ श्लोकवार्तिकसूत्र ४ श्लोक ३९ उत्तरार्धम् ।
३ श्लोकवार्तिकसूत्र ४ श्लोक ३९ उत्तरार्धम् ।
४ मीमांसासूत्रवृत्तिकाराः ।
५ मीमांसादर्शन पृष्ठ ६ पं. १७ ।
६ 'तेनैव' इति पाठः ।

इत्येवं तत्सर्वतो व्यत्ययेन लक्षणमनवद्यमित्याहुः । तेषामपि क्लिष्टकल्पनैव संशयज्ञानेन व्यभिचारानिवृत्तेः । तत्र हि यद्विषयं ज्ञानं तेन सम्प्रयोग इन्द्रियाणामस्त्येव । यद्यपि चोभयविषयं ज्ञानं संशयज्ञानं तथापि तयोरन्यतरेणेन्द्रियं संयुक्तमेव । उभयावमर्शित्वाच्च संशयस्य । येन संयुक्तं चक्षुस्तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिपरिहारः । अव्याप्तिश्च चाक्षुषज्ञानस्येन्द्रियसम्प्रयोगजत्वाभावात् । अप्राप्यकारि च चक्षुरित्युक्तप्रायम् । **श्रोत्रादिवृत्तिरविकल्पिका प्रत्यक्षमिति वृद्धसाङ्ख्याः** । अत्र श्रोत्रादीनामचेतनत्वात्तद्वृत्तेः सुतरामचैतन्यमिति कथं प्रमाणत्वम् । चेतनसंसर्गात्चैतन्याभ्युपगमे वरं चित्त एव प्राामाण्यमभ्युपगन्तुं युक्तम् । न चाविकल्पत्वे प्रामाण्यमस्तीति यत्किञ्चिदेतत् । '[1] **प्रतिविषयाध्यवसायो दृष्ट** इति प्रत्यक्षलक्षणमितीश्वरकृष्णः । तदप्यनुमानेन व्यभिचरितत्वादलक्षणम् । अथ प्रतिराभिमुख्ये वर्तते तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षमित्युच्यते तदप्यनुमानेन तुल्यम् । घटोऽयमितिवदयं पर्वतोऽग्निमानित्याभिमुख्येन प्रतीतेः । अथ '**अनुमानादिविलक्षणो अभिमुखोऽध्यवसायः प्रत्यक्षम्** । तर्हि प्रत्यक्षलक्षणमकरणीयमेव शब्दानुमानलक्षणविलक्षणतयैव तत्सिद्धेः । ततश्च परकीयलक्षणानां दुष्टत्वादिदमेव विशदः[2] प्रत्यक्षम् इति प्रत्यक्षलक्षणमनवद्यम् ॥ ३० ॥

प्रमाणविषयफलप्रमातृरूपेषु चतुर्षु विधिषु तत्त्वं परिसमाप्यते विषयादिलक्षणमन्तरेण प्रमाणलक्षणमसम्पूर्णमिति विषयं लक्षयति–

## प्रमाणस्य विषयो द्रव्यपर्यायात्मकं वस्तु ॥१–१–३१॥

प्रत्यक्षस्य प्रकृतत्वात्तस्यैव विषयादौ लक्षयितव्ये प्रमाणस्येति

---

१ साङ्ख्यकारिका ५ ।

२ १–१–१३ ।

प्रमाणसामान्यग्रहणं प्रत्यक्षवत् प्रमाणान्तराणामपि विषयादिलक्षण मिहैव वक्तुं युक्तमविशेषात्तथा च लाघवमपि भवतीत्येवमर्थम्। जातिनिर्देशाच्च प्रमाणानां प्रत्यक्षादीनां विषयो गोचरो द्रव्यपर्यायात्मकं वस्तु। द्रवति तांस्तान् पर्यायान् गच्छति इति द्रव्यं ध्रौव्यलक्षणम्। पूर्वोत्तरविवर्त्तवर्त्यन्वयप्रत्ययसमधिगम्यमूर्ध्वतासामान्यमिति यावत्। परियन्त्युत्पादविनाशधर्म्माणो भवन्तीति पर्याया विवर्त्ताः। तच्च ते चात्मा स्वरूपं यस्य तद्द्रव्यपर्यायात्मकं वस्तु परमार्थसदित्यर्थः। यद्वाचकमुख्यः " उत्पादव्ययध्रौव्ययुक्तं सद् " इति पारमर्षमपि " उपण्णे इवा विगमे इवा धुवे इवा " इति। तत्र द्रव्यपर्यायग्रहणेन द्रव्यैकान्तपर्यायैकान्तवादिपरिकल्पितविषयव्युदासः। आत्मग्रहणेन चात्यन्तव्यतिरिक्तद्रव्यपर्यायवादिकाणादयौगाभ्युपगतविषयनिरासः। यच्छ्रीसिद्धसेनः

" दोहिं वि नएहिं नीयं,—सत्थमलूएण तहवि मिच्छत्तं।
जं सविसयप्पहाण,—त्तणेण अन्नोन्ननिरविक्खा " ॥ ३१ ॥

कुतः पुनर्द्रव्यपर्यायात्मकमेव वस्तु प्रमाणानां विषयो न द्रव्यमात्रं पर्यायमात्रमुभयं वा स्वतन्त्रमित्याह—

॥ अर्थक्रियासामर्थ्यात् ॥ १-१-३२ ॥

अर्थस्य हानोपादानादिलक्षणस्य क्रिया निष्पत्तिस्तत्र सामर्थ्यात् द्रव्यपर्यायात्मकस्यैव वस्तुनोऽर्थक्रियासमर्थत्वादित्यर्थः ॥ ३२ ॥ [illegible] नानेकं ततः किमित्याह

॥ तल्लक्षणत्वाद्वस्तुनः ॥ १-१-३३ ॥

तदर्थक्रियासामर्थ्यं लक्षणमसाधारणं रूपं यस्य तत्तल्लक्षणं तस्य

१ [illegible] १-२६।
२ [illegible] ( [illegible] )
३ [illegible] ४१। [illegible]

भावस्तत्त्वं परमार्थसतो रूपस्य । अयमर्थः । अर्थक्रियार्थी हि सर्वः प्रमाणमन्वेषते अपि नामेतः प्रमेयमर्थक्रियाक्षमं विनिश्चित्य कृतार्थो भवेयमिति । न व्यसनितया । तद्यदि प्रमाणविषयोऽर्थोऽर्थक्रियाक्षमो न भवेत्तदा नासौ प्रमाणपरीक्षणमाद्रियेत । यदाह–"अर्थक्रियासमर्थस्य विचारैः किं तदर्थिनाम् । पण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षया" इति । तत्र न द्रव्यैकरूपोऽर्थोऽर्थक्रियाकारी । स ह्यप्रच्युतानुत्पन्नस्थिरैकरूपः कथमर्थक्रियां कुर्वीत क्रमेणाक्रमेण वा । अन्योन्यव्यवच्छेदरूपाणां प्रकारान्तरासम्भवात् । तत्र न क्रमेण । स हि कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यात् । समर्थस्य कालक्षेपायोगात् । कालक्षेपिणो वाऽसामर्थ्यप्राप्तेः । समर्थोऽपि तत्तत्सहकारिसमवधाने तं तमर्थं करोतीति चेत् । न तर्हि तस्य सामर्थ्यमपरसहकारिसापेक्षवृत्तित्वात् । सापेक्षमसमर्थमिति हि किं नाश्रौषीः । न तेन सहकारिणोऽपेक्ष्यन्तेऽपि तु कार्यमेव सहकारिष्वसत्स्वभवत्तानपेक्षत इति चेत् । तत्किं स भावोऽसमर्थः । समर्थश्चेत् किं सहकारिमुखप्रेक्षणदीनानि तान्युपेक्षते न पुनर्झटिति घटयति । ननु समर्थमपि बीजमिलोदिसहकारिसहितमेवाङ्कुरं करोति नान्यथा । तत् किं तस्य सहकारिभिः किञ्चिदुपक्रियेत न वा । नो चेत् । स किं पूर्ववन्नोदास्ते । उपक्रियेत चेत् । स तर्हि तैरुपकारो भिन्नोऽभिन्नो वा क्रियेत इति निर्वचनियम् । अभेदे स एव क्रियते इति लाभमिच्छतो मूलक्षतिरायाता । भेदे स कथं तस्योपकारः । किं न सह्यविन्ध्यादेरपि, तत्सम्बन्धात्तस्यायमिति चेत् । उपकार्योपकारयोः कः सम्बन्धः । न संयोगो द्रव्ययोरेव तस्य भावात् । नापि समवायस्तस्य प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वान्न नियतसम्बन्धिसम्बन्धत्वं युक्तम् । तत्त्वे

१ इला–पृथिवी । उत्तमा मृदित्यर्थः ।

वा तत्कृत उपकारोऽस्याभ्युपगन्तव्यः तथा च सत्युपकारस्य भेदाभेद कल्पना तदवस्थैव । उपकारस्य समवायादभेदे समवाय एव कृतः स्यात् । भेदे पुनरपि समवायस्य न नियतसम्बन्धिसम्बन्धत्वम् । सम्बन्धत्वे समवायस्य विशेषण विशेष्यभावो हेतुरिति चेत्। उपकार्योपकारकभावाभवे तस्यापि प्रतिनियमहेतुत्वाभावात् । उपकारे तु पुनर्भेदाभेदविकल्पद्वारेण तदेवावर्तते । तन्नैकान्तनित्यो भावः क्रमेणार्थक्रियां कुरुते । नाप्यक्रमेण । न ह्येको भावः सकलकालकलाभाविनीर्युगपत् सर्वाः क्रियाः करोतीति प्रातीतिकम् । कुरुतां वा तथापि द्वितीयक्षणे किं कुर्यात् ।करणे वा क्रमपक्षभावी दोषः।अकरणेऽनर्थक्रियाकारित्वादवस्तुत्वप्रसङ्गः। इत्येकान्तनित्यात् क्रमाक्रमाभ्यां व्याप्तार्थक्रिया व्यापकानुपलब्धिबलात् व्यापकनिवृत्तौ निवर्तमाना व्याप्यमर्थक्रियाकारित्वं निवर्तयति तदपि स्वव्याप्यं सत्त्वमित्यसन् द्रव्यैकान्तः । पर्यायैकान्तरूपोऽपि प्रतिक्षणविनाशी भावो न क्रमेणार्थक्रियासमर्थो देशकृतस्य कालकृतस्य च क्रमस्यैवाभावात् । अवस्थितस्यैव हि नानादेशकालव्याप्तिर्देशकालक्रमश्चाभिधीयते । न चैकान्तविनाशिनि सास्ति । यदाहुः " यो यत्रैव स तत्रैव यो यदैव तदैव सः । न देशकालयोर्व्याप्तिर्भावानामिह विद्यते ॥ " न च सन्तानापेक्षया पूर्वोत्तरक्षणाना क्रमः सम्भवति । सन्तानस्यावस्तुत्वात् । वस्तुत्वेऽपि तस्य यदि क्षणिकत्वं न तर्हि क्षणेभ्यः कश्चिद्विशेषः । अथाक्षणिकत्वं न सुस्थितः पर्यायैकान्तवादः । यदुक्तम् " अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैपि भावम्।उत्तिष्ठ भिक्षो फलितास्तवाशाः सोऽयं समाप्तः क्षणभङ्गवादः ॥ " इति । नाप्यक्रमेण क्षणिकेऽर्थक्रिया सम्भवति । स ह्येको रूपादिक्षणो युगपदनेकान् रसादिक्षणान् जनयन् यद्येकेन स्वभावेन जनयेत्तदा तेषामेकत्वं स्यादेकस्वभावजन्यत्वात् । अथ

नानास्वभावैर्जनयति किञ्चिदुपादानभावेन किञ्चित् सहकारित्वेन। ते तर्हि स्वभावास्तस्यात्मभूता अनात्मभूता वा। अनात्मभूताश्चेत् स्वभावहानिः। यदि तस्यात्मभूतास्तर्हि तस्यानेकत्वं स्वभावानां चैकत्वं प्रसज्येत। अथ य एवैकत्रोपादानभावः स एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते। तर्हि नित्यस्यैकरूपस्यापि क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसाङ्कर्यं च माभूत्। अथाक्रमात् क्रमिणामनुत्पत्तेर्नैवमिति चेत्। एकानंशकारणाद्युगपदनेककारणसाध्यानेककार्यविरोधात्[१] क्षणिकानामप्यक्रमेण कारित्वं मा भूदिति पर्यायैकान्तादपि क्रमाक्रमयोर्व्यापकयोर्निवृत्त्यैव व्याप्यार्थक्रियापि व्यावर्तते। तद्व्यावृत्तौ च सत्त्वमपि व्यापकानुपलब्धिबलेनैव निवर्तत इत्यसन् पर्यायैकान्तोऽपि। काणादास्तु द्रव्यपर्यायावुभावप्यभ्युपागमन्। पृथिव्यादीनि गुणाद्याधाररूपाणि द्रव्याणि। गुणादयस्त्वाधेयत्वात्पर्यायाः। ते च केचित् क्षणिकाः। केचिद्यावद्द्रव्यभाविनः केचिन्नित्या इति केवलमितरेतरविनिर्लुठितधर्मिधर्माभ्युपगमान्न समीचीनविषयवादिनः। तथाहि यदि द्रव्यादत्यन्तविलक्षणं सत्त्वं तदा द्रव्यमसदेव भवेत्। सत्तायोगात् सत्त्वमस्त्येवेति चेत्। असतां सत्तायोगेऽपि कुतः सत्त्वम्। सतां तु निष्फलः सत्तायोगः। स्वरूपसत्त्वं भावानामस्त्येवेति चेत् तर्हि किं शिखण्डिना सत्तायोगेन। सत्तायोगात् प्राग्भावो न सन्नाप्यसन्। सत्तासम्बन्धात्तु सन्निति चेत् वाङ्मात्रमेतत्। सदसद्विलक्षणस्य प्रकारान्तरस्यासम्भवात्। अपि च पदार्थः सत्ता योग इति न त्रितयं चकास्ति। पदार्थसत्तयोश्च योगो यदि तादात्म्यं तदनभ्युपगमबाधितम्। अत एव न संयोगः समवायस्त्वनाश्रित इति सर्वं सर्वेण सम्बध्नीयान्न वा किंचित् केनचित्। एवं द्रव्यगुणकर्मणां द्रव्यत्वादिभिर्द्रव्यस्य, द्रव्यगुणकर्मसामान्य-

---

१ पृष्ठ ३७।

विशेषैः पृथिव्यप्तेजोवायूनां, पृथिवीत्वादिभिराकाशादीनां च द्रव्याणां स्वगुणैर्योगे यथायोगं सर्वमभिधानीयम्। एकान्ताभिन्नाना केनचित् कथञ्चित् सम्बन्धायोगात् इत्यौलूक्यपक्षेऽपि विषयव्यवस्था। ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनस्तदवस्थमेव दौस्थ्यम्। तथाहि द्रव्यपर्याययोरैकान्तिकभेदाभेदपरिहारेण कथञ्चिद्भेदाभेदवादः स्याद्वादिभिरुपेयते। न चासौ युक्तो विरोधादिदोषात्। विधिप्रतिषेधरूपयोरेकत्र वस्तुन्यसम्भवान्नीलानीलवत्। १ अथ केनचिद्रूपेण भेदः येनचिदभेदः। एवं सति भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधिकरण्यम्। २ यं चात्मानं पुरोधाय भेदो यं चाश्रित्याभेदस्तावप्यात्मानौ भिन्नाभिन्नावन्यथैकान्तवादप्रसक्तिस्तथा च सत्यनवस्था ३ येन च रूपेण भेदस्तेन भेदश्चाभेदश्च येन चाभेदस्तेनाप्यभेदश्च भेदश्चेति सङ्करः। ४ येन रूपेण भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः। ५ भेदाभेदात्मकत्वे च वस्तुनो विविक्तेनाकारेण निश्चेतुमशक्तेः संशयः। ६ ततश्चाप्रतिपत्तिरिति न विषयव्यवस्था। नैवम्। प्रतीयमाने वस्तुनि विरोधस्यासम्भवात्। यत्सन्निधाने यो नोपलभ्यते स तस्य विरोधीति निश्चीयते। उपलभ्यमाने च वस्तुनि को विरोधगन्धावकाशः। नीलानीलयोरपि यद्येकत्रोपलम्भोऽस्ति तदा नास्ति विरोधः। एकत्र चित्रपटीज्ञाने सौगतैर्नीलानीलयोर्विरोधाभ्युपगमात्, योगैश्चैकस्य चित्रस्य रूपस्याभ्युपगमात्, एकस्यैव पटादेश्चलाचलरक्तारक्तावृतानावृतादिविरुद्धधर्माणामुपलब्धेः प्रकृते को विरोधशङ्कावकाशः। एतेन वैयधिकरण्यदोषोऽप्यपास्तः। तयोरेकाधिकरणत्वेन प्रागुक्तयुक्तिदिशा प्रतीतेः। यदप्यनवस्थानं दूषणमुपन्यस्तम्। तदप्यनेकान्तवादिमतानभिज्ञैरेव तन्मतम्। द्रव्यपर्यायात्मके वस्तुनि द्रव्यपर्याययोरेव भेदः भेदध्वनिना तयोरेवाभिधानात्

१ नैयायिकमते।

द्रव्यरूपेणाभेदः इति द्रव्यमेवाभेदः । एकानेकात्मकत्वाद्वस्तुनः । यौ च सङ्करव्यतिकरौ तौ मेचकज्ञाननिदर्शनेन सामान्यविशेषदृष्टान्तेन च परिहृतौ । अथ तत्र तथाप्रतिभासः समाधानं परस्यापि तदेवास्तु प्रतिभासस्यापक्षपातित्वात् । निर्णीते चार्थे संशयोऽपि न युक्तः तस्य सकम्पप्रतिपत्तौ दुर्घटत्वात् प्रतिपन्ने च वस्तुन्यप्रतिपत्तिरिति साहसम् । उपलब्ध्यभिधानादनुपलम्भोऽपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धं द्रव्यपर्यात्मकं वस्त्विति ॥ ३३ ॥

ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनः कथमर्थक्रिया नाम । सा हि क्रमाक्रमाभ्यां व्याप्ता । द्रव्यपर्यायैकान्तवदुभयात्मकादपि व्यावर्तेताम् । शक्यं हि वक्तुमुभयात्मा भावो न क्रमेणार्थक्रियां कर्तुं समर्थः । समर्थस्य क्षेपायोगात् । न च सहकार्यपेक्षा युक्ता । द्रव्यस्यापि कार्यत्वेन सहकारिकृतोपकारनिरपेक्षत्वात् । पर्यायाणां च क्षणिकत्वेन पूर्वापरकार्यकालाप्रतीक्षणात् । नाप्यक्रमेण युगपद्धि सर्वकार्याणि कृत्वा पुनरकुर्वतोऽनर्थक्रियाकारित्वादसत्त्वं कुर्वतः क्रमपक्षभावी दोषः । द्रव्यपर्यायवादयोश्च यो दोषः स उभयवादेऽपि समानः । " प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न सः ।" इति वचनादित्याह—

## ॥ पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षणपरिणामेनास्यार्थक्रियोपपत्तिः ॥ १-१-३४ ॥

पूर्वोत्तरयोराकारयोर्विवर्तयोर्यथासङ्ख्येन यौ परिहारस्वीकारौ ताभ्यां स्थितिः सैव लक्षणं यस्य स चासौ परिणामश्च । एतेनास्य द्रव्यपर्यायात्मकस्यार्थक्रियोपपद्यते अयमर्थः । न द्रव्यरूपं न पर्यायरूपं नोभयरूपं वस्तु । येन तत्तत्पक्षभावी दोषः स्यात् । किं तु

---

१ दृष्टेष्टाविरुद्ध-दृष्टं च तत् दृष्टेन तदविरुद्धं चेति विशेषणत्रयात्मक कर्मधारय ।

२ कालविलम्बाभावात् ।

स्थित्युत्पादव्ययात्मकं शबलं जात्यन्तरमेव वस्तु । तेन तत्तत्सहकारिसन्निधाने क्रमेण युगपद्वा तां तामर्थक्रियां कुर्वतः सहकारिकृतां चोपकारपरम्परामुपजीवतो भिन्नाभिन्नोपकारादिनोदनानुमोदनाभमुदितात्मनः उभयपक्षभाविदोषशङ्काकलङ्काकान्दिशीकस्य भावस्य न व्यापकानुपलब्धिबलेनार्थक्रियाया, नापि तद्व्याप्यस्य सत्त्वस्य निवृत्तिरिति सिद्धम् । द्रव्यपर्यायात्मकं वस्तु प्रमाणस्य विषयः ॥३४॥

फलमाह—

## ॥ फलमर्थप्रकाशः ॥ १-१-३५ ॥

प्रमाणस्येति वर्तते प्रमाणस्य फलमर्थप्रकाशोऽर्थसंवेदनम् । अर्थार्थी हि सर्वः प्रमातेत्यर्थसंवेदनमेव फलं युक्तम् । नन्वेवं प्रमाणमेव फलत्वेनोक्तं स्यात् । ओमिति चेत् तर्हि प्रमाणफलयोरभेदः स्यात् । ततः किं स्यात् । प्रमाणफलयोरैक्ये सदसत्पक्षभावी दोषः स्यात् । नासतः करणत्वं न सतः फलत्वम् । सत्यमस्त्ययं दोषो जन्मनि न व्यवस्थायाम् यदाहुः । "नासतो हेतुता नापि सतो हेतोः फलात्मता । इति जन्मनि दोषः स्याद्व्यवस्था तु न दोषभाग्" ॥ १ ॥ इति ॥ ३५ ॥

व्यवस्थामेव दर्शयति—

## ॥ कर्मस्था क्रिया ॥ १-१-३६ ॥

कर्मोन्मुखो ज्ञानव्यापारः फलम् ॥ ३६ ॥

प्रमाणं किमित्याह—

## ॥ कर्तृस्था प्रमाणम् ॥ १-१-३७ ॥

कर्तृव्यापारमुल्लिखन् बोधः प्रमाणम् ॥ ३७ ॥

---

१ " कान्दिशीको भयद्रुते " इति ( अभिधानचिन्तामणिः ) ३-३० ।
२ ओमित्यङ्गीकारे । अङ्गीक्रियते चेदित्यर्थः ।

कथमस्य प्रमाणत्वं करणं हि तत् । साधकतमं च करणमुच्यते । अव्यवहितफलं तदित्याह—

## ॥ तस्यां सत्यामर्थप्रकाशसिद्धेः ॥ १-१-३८ ॥

तस्यामिति कर्तृस्थायां प्रमाणरूपायां क्रियायां सत्यामर्थप्रकाशस्य फलस्य सिद्धेर्व्यवस्थापनात् एकज्ञानगतत्वेन प्रमाणफलयोरभेदो व्यवस्थाप्यव्यवस्थापकभावात्तु भेद इति भेदाभेदरूपः स्याद्वादमबाधितमनुपतति प्रमाणफलभाव इतीदमखिल प्रमाणसाधारणमव्यवहितं फलमुक्तम् ॥ ३८ ॥

अव्यवहितमेव फलान्तरमाह—

## ॥ अज्ञाननिवृत्तिर्वा ॥ १-१-३९ ॥

प्रमाणप्रवृत्तेः पूर्वं प्रमातुर्विवक्षिते विषये यदज्ञानं तस्य निवृत्तिः फलमित्यन्ये । यदाहुः " [१]प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम् । केवलस्य सुखोपेक्षे शेषस्यादानहानधीः ॥ " इति ॥ ३९ ॥

व्यवहितमाह—

## ॥ अवग्रहादीनां वा क्रमोपजननधर्माणां पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलम् ॥ १-१-४० ॥

अवग्रहेहावायधारणास्मृतिप्रत्यभिज्ञानोहानुमानानां क्रमेणोपजायमानानां यद्यत् पूर्वं तत्तत्प्रमाणं यद्यदुत्तरं तत्तत्फलरूपं प्रतिपत्तव्यम् । अवग्रहपरिणामवान् ह्यात्मा ईहारूपफलतया परिणमति । इतीहाफलापेक्षया अवग्रहः प्रमाणम् । ततोऽपीहा प्रमाणमवायः फलम् । पुनरवायः प्रमाणं धारणा फलम् । ईहाधारणयोर्ज्ञानोपादानत्वात् ज्ञानरूपत्तोन्नेया । ततो धारणा प्रमाणं स्मृतिः

१ न्यायावतारश्लोक २८ ।

फलम् । ततोऽपि स्मृतिः प्रमाणं प्रत्यभिज्ञानं फलम् । ततोऽपि प्रत्यभिज्ञा प्रमाणमूहः फलम् । ततोऽप्यूहः प्रमाणमनुमानं फलमिति प्रमाणफलविभाग इति ॥ ४० ॥

फलान्तरमाह—

## ॥ हानादिबुद्धयो वा ॥ १–१–४१ ॥

हानोपादानोपेक्षाबुद्धयो वा प्रमाणस्य फलम् । फलबहुत्वप्रतिपादनं सर्वेषां फलत्वेन न विरोधो वैवक्षिकत्वात् फलस्येति प्रतिपादनार्थम् ॥ ४१ ॥

एकान्तभिन्नाभिन्नफलवादिमतपरीक्षार्थमाह—

## ॥ प्रमाणाद्भिन्नाभिन्नम् ॥ १–१–४२ ॥

करणरूपत्वात् क्रियारूपत्वाच्च प्रमाणफलयोर्भेदः । अभेदे प्रमाणफलभेदव्यवहारानुपपत्तेः प्रमाणमेव वा फलमेव वा भवेत् । अप्रमाणाद्व्यावृत्त्या प्रमाणव्यवहारः, अफलाद्व्यावृत्त्या च फलव्यवहारो भविष्यतीति चेत् । नैवम् । एवं सति प्रमाणान्तराद्व्यावृत्त्याऽप्रमाणव्यवहारः, फलान्तराद्व्यावृत्त्याऽफलत्वव्यवहारोऽप्यस्तु विजातीयादिव सजातीयादपि व्यावृत्तत्वाद्वस्तुनः । तथा तस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः । भेदे त्वात्मान्तरवत्तदनुपपत्तिः । अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति समवायलक्षणया प्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति नात्मान्तरे तत्प्रसङ्ग इति चेत् । न । समवायस्य नित्यत्वाद्व्यापकत्वान्नियतात्मवत्सर्वात्मस्वप्यविशेषान्न ततो नियतप्रमातृसम्बन्धप्रतिनियमः तत्सिद्धमेतत् प्रमाणात्फलं कथञ्चिद्भिन्नमभिन्नं चेति ॥ ४२ ॥

प्रमातारं कथयति—

व्याप्तिरिति यो व्याप्नोति यश्च व्याप्यते तयोरुभयोर्धर्मः । तत्र यदा व्यापकधर्मतया विवक्ष्यते तदा व्यापकस्य गम्यस्य व्याप्ये धर्म्मे सति तत्र धर्मिणि व्याप्यमस्ति यत्र सर्वत्र भाव एव व्यापकस्य स्वगतो धर्मो व्याप्तिः । ततश्च व्याप्यभावापेक्षया व्याप्यस्यैव व्याप्यताप्रतीतिः । नन्वेवमवधार्यते व्यापकस्यैव व्याप्ये सति भाव इति हेत्वभावप्रसङ्गात् अव्यापकस्यापि मूर्तत्वादेस्तत्र भावात् । नापि व्याप्ये सत्येवेत्यवधार्यते । प्रयत्नानन्तरीयकत्वादेरहेतुत्वापत्तेः । साधारणश्च हेतुः स्यान्नित्यत्वस्य प्रमेयेष्वेव भावात् । यदा तु व्याप्यधर्मतया व्याप्तिर्विवक्ष्यते तदा व्याप्यस्य वा गमकस्य तत्रैव व्यापके गम्ये सति यत्र धर्मिणि व्यापकोऽस्ति तत्रैव भावो न तदभावेऽपि व्याप्तिरिति । अत्रापि नेवमवधार्यते व्याप्यस्यैव तत्र भाव इति । हेत्वभावप्रसङ्गादव्याप्यस्यापि तत्र भावात् । नापि व्याप्यस्य तत्र भाव एवेति सपक्षैकदेशवृत्तेरहेतुत्वप्राप्तेः साधारणस्य च हेतुत्वं स्यात् प्रमेयत्वस्य नित्येष्ववश्यंभावादिति । व्याप्यव्यापकधर्मता-सङ्कीर्तनं तु व्याप्तेरुभयत्र तुल्यधर्मतयैकाकारा प्रतीतिर्मा भूदिति प्रदर्शनार्थम् । तथाहि पूर्वत्रायोगव्यवच्छेदेनावधारणमुत्तरत्रान्ययोग-व्यवच्छेदेनेति कुत उभयत्रैकाकारता व्याप्तेः । तदुक्तम् " **लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः । नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः** " । इति ॥ ६ ॥

अथ क्रमप्राप्तमनुमानं लक्षयति—

## ॥ साधनात्साध्यविज्ञानमनुमानम् ॥१-२-७॥

साधनं साध्यं च वक्ष्यमाणलक्षणं दृष्टादुपदिष्टाद्वा । साधनाद्-त्साध्यस्य विज्ञानं सम्यगर्थनिर्णयात्मकं तदनुमीयतेऽनेनेत्यनुमानं लिङ्गग्रहणसम्बन्धस्मरणयोः पश्चात्परिच्छेदनम् ॥ ७ ॥

फलम् । ततोऽपि स्मृतिः प्रमाणं प्रत्यभिज्ञानं फलम् । ततोऽपि प्रत्यभिज्ञा प्रमाणमूहः फलम् । ततोऽप्यूहः प्रमाणमनुमानं फलमिति प्रमाणफलविभाग इति ॥ ४० ॥

फलान्तरमाह—

## ॥ हानादिबुद्धयो वा ॥ १-१-४१ ॥

हानोपादानोपेक्षाबुद्धयो वा प्रमाणस्य फलम् । फलबहुत्वप्रतिपादनं सर्वेषां फलत्वेन न विरोधो वैवक्षिकत्वात् फलस्येति प्रतिपादनार्थम् ॥ ४१ ॥

एकान्तभिन्नाभिन्नफलवादिमतपरीक्षार्थमाह—

## ॥ प्रमाणाद्भिन्नाभिन्नम् ॥ १-१-४२ ॥

करणरूपत्वात् क्रियारूपत्वाच्च प्रमाणफलयोर्भेदः । अभेदे प्रमाणफलभेदव्यवहारानुपपत्तेः प्रमाणमेव वा फलमेव वा भवेत् । अप्रमाणाद्व्यावृत्त्या प्रमाणव्यवहारः, अफलाद्व्यावृत्त्या च फलव्यवहारो भविष्यतीति चेत् । नैवम् । एवं सति प्रमाणान्तराद्व्यावृत्त्याऽप्रमाणव्यवहारः, फलान्तराद्व्यावृत्त्याऽफलत्वव्यवहारोऽप्यस्तु विजातीयादिव सजातीयादपि व्यावृत्तत्वाद्वस्तुनः । तथा तस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः । भेदे त्वात्मान्तरवत्तदनुपपत्तिः । अथ यत्रैवात्मनि प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति समवायलक्षणया प्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति नात्मान्तरे तत्प्रसङ्ग इति चेत् । न । समवायस्य नित्यत्वाद्व्यापकत्वान्नियतात्मवत्सर्वात्मस्वप्यविशेषाच्च ततो नियतप्रमातृसम्बन्धप्रतिनियमः तत्सिद्धमेतत् प्रमाणात्फलं कथञ्चिद्भिन्नमभिन्नं चेति ॥ ४२ ॥

प्रमातारं कथयति—

व्याप्तिरिति यो व्याप्नोति यश्च व्याप्यते तयोरुभयोर्धर्मः। तत्र यदा व्यापकधर्मतया विवक्ष्यते तदा व्यापकस्य गम्यस्य व्याप्ये धर्म्मे सति तत्र धर्मिणि व्याप्यमस्ति यत्र सर्वत्र भाव एव व्यापकस्य स्वगतो धर्मो व्याप्तिः। ततश्च व्याप्यभावापेक्षया व्याप्यस्यैव व्याप्यताप्रतीतिः। नन्वेवमवधार्यते व्यापकस्यैव व्याप्ये सति भाव इति हेत्वभावप्रसङ्गात् अव्यापकस्यापि मूर्तत्वादेस्तत्र भावात्। नापि व्याप्ये सत्येवेत्यवधार्यते। प्रयत्नानन्तरीयकत्वादेरहेतुत्वापत्तेः। साधारणश्च हेतुः स्यान्नित्यत्वस्य प्रमेयेष्वेव भावात्। यदा तु व्याप्यधर्मतया व्याप्तिर्विवक्ष्यते तदा व्याप्यस्य वा गमकस्य तत्रैव व्यापके गम्ये सति यत्र धर्मिणि व्यापकोऽस्ति तत्रैव भावो न तदभावेऽपि व्याप्तिरिति। अत्रापि नैवमवधार्यते व्याप्यस्यैव तत्र भाव इति। हेत्वभावप्रसङ्गादव्याप्यस्यापि तत्र भावात्। नापि व्याप्यस्य तत्र भाव एवेति सपक्षैकदेशवृत्तेरहेतुत्वप्राप्तेः साधारणस्य च हेतुत्वं स्यात् प्रमेयत्वस्य नित्येष्ववश्यंभावादिति। व्याप्यव्यापकधर्मता-सङ्कीर्तनं तु व्याप्तेरुभयत्र तुल्यधर्मतयैकाकारा प्रतीतिर्मा भूदिति प्रदर्शनार्थम्। तथाहि पूर्वत्रायोगव्यवच्छेदेनावधारणमुत्तरत्रान्ययोग-व्यवच्छेदेनेति कुत उभयत्रैकाकारता व्याप्तेः। तदुक्तम् "**लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः। नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः**" । इति ॥ ६ ॥

अथ क्रमप्राप्तमनुमानं लक्षयति—

## ॥ साधनात्साध्यविज्ञानमनुमानम् ॥१-२-७॥

साधनं साध्यं च वक्ष्यमाणलक्षणं दृष्टादुपदिष्टाद्वा। साधनात्साध्यस्य विज्ञानं सम्यगर्थनिर्णयात्मकं तदनुमीयतेऽनेनेत्यनुमानं लिङ्गग्रहणसम्बन्धस्मरणयोः पश्चात्परिच्छेदनम् ॥ ७ ॥

## ॥ तद्द्विधा स्वार्थं परार्थं च ॥ १-२-८ ॥

तदनुमानं द्विप्रकारं स्वार्थपरार्थभेदात्। स्वव्यामोहनिवर्तनक्षमं स्वार्थम्। परव्यामोहनिवर्तनक्षमं परार्थम् ॥ ८ ॥

तत्र स्वार्थं लक्षयति—

## ॥ स्वार्थं स्वनिश्चितसाध्याविनाभावैकलक्षणात् साधनात् साध्यज्ञानम् ॥ १-२-९ ॥

साध्यं विनाऽभवनं साध्याविनाभावः स्वेनात्मना निश्चितं साध्याविनाभाव एवैकं लक्षणं यस्य तत् स्वनिश्चितसाध्याविनाभावैकलक्षणं तस्मात्तथाविधात् साधनाल्लिङ्गात् साध्यस्य लिङ्गिनो ज्ञानं स्वार्थमनुमानम्। इह च न योग्यतया लिङ्गं परोक्षार्थप्रतिपत्तेरङ्गम्। यथा बीजमङ्कुरस्य। अदृष्टाद्धूमादग्नेरप्रतिपत्तेः। नापि स्वनिश्चयज्ञानापेक्षं यथा प्रदीपो घटादेः। दृष्टादस्य निश्चिताविनाभावादप्रतिपत्तेः। तस्मात्परोक्षार्थनान्तरीयकतया निश्चयनमेव लिङ्गस्य व्यापार इति निश्चितग्रहणम्। ननु चासिद्धविरुद्धानैकान्तिकहेत्वाभासनिराकरणार्थं हेतोः पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरिति त्रैलक्षण्यमाचक्षते भिक्षवः। तथा ह्यनुमेये धर्मिणि लिङ्गस्य सत्त्वमेव निश्चितमित्येकं रूपम् अत्र सत्त्ववचनेनासिद्धं चाक्षुषत्वादि निरस्तम्। एवकारेण पक्षैकदेशासिद्धो निरस्तो यथा अनित्यानि पृथिव्यादीनि भूतानि गन्धवत्त्वात्। अत्र पक्षीकृतेषु पृथिव्यादिषु चतुर्षु भूतेषु पृथिव्यामेव गन्धवत्त्वं सत्त्ववचनस्य पश्चात्कृतेनैवकारेणासाधारणो धर्मो निरस्तः। यदि ह्यनुमेय एव सत्त्वमित्युच्येत श्रावणमेव हेतुः स्यात्। निश्चितग्रहणेन सन्दिग्धासिद्धः सर्वो निरस्तः सपक्षे एव सत्त्वं निश्चितमिति द्वितीयं रूपम्। इहापि सत्त्वग्रहणेन विरुद्धो निरस्तः। स हि नास्ति सपक्षे एवकारेण साधा-

रणानैकान्तिकः। स हि न सपक्षे एव वर्तते। किं तु विपक्षेऽपि सत्त्वग्रहणात् पूर्वमवधारणकरणेन सपक्षाव्यापिनोऽपि प्रयत्नानन्तरीयकत्वादेर्हेतुत्वमुक्तं पश्चादवधारणे ह्ययमर्थः स्यात्। सपक्षे सत्त्वमेव यस्य स हेतुरिति प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्। निश्चितवचनेन सन्दिग्धान्वयोऽनैकान्तिको निरस्तः। यथा सर्वज्ञः कश्चिद्वक्तृत्वात्। वक्तृत्वं हि सपक्षे सर्वज्ञे सन्दिग्धम्। विपक्षे त्वसत्त्वमेव निश्चितमिति तृतीयं रूपम्। तत्रासत्त्वग्रहणेन विरुद्धस्य निरासः। विरुद्धो हि विपक्षेऽस्ति। एवकारेण साधारणस्य विपक्षैकदेशवृत्तेर्निरासः। प्रयत्नानन्तरीयकत्वे हि साध्ये नित्यत्वं विपक्षैकदेशे विद्युदादावस्त्याकाशादौ नास्ति। ततो नियमेनास्य निरासोऽसत्त्वशब्दात्। पूर्वस्मिन्नवधारणे ह्ययमर्थः स्यात्। विपक्ष एव यो नास्ति स हेतुः। तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि नास्ति ततो न हेतुः स्यात्ततः पूर्वं न कृतम्। निश्चितग्रहणेन सन्दिग्धविपक्षव्यावृत्तिकोऽनैकान्तिको निरस्तः। तदेवं त्रैरूप्यमेव हेतोरसिद्धादिदोषपरिहारक्षममिति तदेवाभ्युपगन्तुं युक्तमिति किमेकलक्षणकत्वेनेति। तदयुक्तम्। अविनाभावनियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः। अविनाभावो ह्यन्यथानुपपन्नत्वम्। तच्चासिद्धस्य विरुद्धस्य व्यभिचारिणो वा न सम्भवति। त्रैरूप्ये तु सत्यप्यविनाभावाभावे हेतोरगमकत्वदर्शनात्। यथा स श्यामो मैत्रतनयत्वादितरमैत्रपुत्रवदित्यत्र। अथ विपक्षान्नियमवती व्यावृत्तिस्तत्र न दृश्यते ततो न गमकत्वम्। तर्हि तस्या एवाविनाभावरूपत्वादितररूपसद्भावेऽपि तदभावे हेतोः स्वसाध्यसिद्धिं प्रति गमकत्वानिष्टौ सैव प्रधानं लक्षणमस्तु। तत्सद्भावेऽपररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च। यथा सन्त्यद्वैतवादिनोऽपि प्रमाणानि इष्टानिष्टसाधनदूषणान्यथानुपपत्तेः। न चात्र पक्षधर्मत्वं सपक्षे सत्त्वं

चास्ति केवलमविनाभावमात्रेण गमकत्वोपपत्तिः। ननु पक्षधर्मताभावे श्वेतः प्रासादः काकस्य कार्ष्ण्यादित्यादयोऽपि हेतवः प्रसज्येरन्। नैवम्। अविनाभावबलेनैवापक्षधर्माणामपि गमकत्वाभ्युपगमात्। न चेह सोऽस्ति ततोऽविनाभाव एव हेतोः प्रधानं लक्षणमभ्युपगन्तव्यम्। सति तस्मिन्नसत्यपि त्रैलक्षण्ये हेतोर्गमकत्वदर्शनात् न तु त्रैरूप्यं हेतुलक्षणमव्यापकत्वात्। तथा च सर्वं क्षणिकं सत्त्वादित्यत्र मूर्द्धाभिषिक्ते साधने सौगतैः सपक्षे सतोऽपि हेतोः सत्त्वस्य गमकत्वमिष्यत एव। तदुक्तम् "अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम्। नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्" इति। एतेन पञ्चलक्षणकत्वमपि नैयायिकोक्तं प्रत्युक्तम् तस्याप्यविनाभावप्रपञ्चत्वात्। तथाहि त्रैरूप्यं पूर्वोक्तमबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्च रूपाणि। तत्र प्रत्यक्षागमबाधितधर्मिनिर्देशानन्तरप्रयुक्तत्वं बाधितविषयत्वं यथाऽनुष्णस्तेजोऽवयवी कृतकत्वात् घटवत्। ब्राह्मणेन सुरा पेया द्रव्यत्वात् क्षीरवत्। इति तन्निषेधाद् बाधितविषयत्वं प्रतिपक्षहेतुबाधितत्वम्। सत्प्रतिपक्षत्वं यथाऽनित्यः शब्दो नित्यधर्मानुपलब्धेः अत्र प्रतिपक्षहेतुर्नित्यः शब्दोऽनित्यधर्मानुपलब्धेरिति। तन्निषेधादसत्प्रतिपक्षत्वम्। तत्र बाधितविषयस्य सत्प्रतिपक्षस्य चाविनाभावाभावादविनाभावेनैव रूपद्वयमपि संगृहीतम्। यदाह "बाधाविनाभावयोर्विरोधात्" इति अपि च स्वलक्षणलक्षितपक्षविषयत्वाभावात्तद्दोषेणैव दोषद्वयमिदं चरितार्थं किं पुनर्वचनेन। तत्स्थितमेतत् साध्याविनाभावित्वलक्षणाद्धेतुरिति॥ ९॥

तत्राविनाभावं लक्षयति—

१ 'गमकत्वोपपत्ते' [illegible]।

२ [illegible]।

## ॥ सहक्रमभाविनोः सहक्रमभावनियमोऽविनाभावः ॥ १-२-१० ॥

सहभाविनोरेकसामग्र्यधीनयोः फलादिगतयो रूपरसयोर्व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वयोः क्रमभाविनोः कृत्तिकोदयशकटोदययोः कार्यकारणयोर्धूमधूमध्वजयोर्यथासंख्यं यः सहक्रमभावनियमः सहभाविनोः सहभावनियमः क्रमभाविनोः क्रमभावनियमः साध्यसाधनयोरिति प्रकरणाल्लभ्यते सोऽविनाभावः ॥ १० ॥

अथैवंविधोऽविनाभावो निश्चितः साध्यप्रतिपत्त्यङ्गमित्युक्तम् । तन्निश्चयश्च कुतः प्रमाणात् । न तावत् प्रत्यक्षात् तस्येन्द्रियकस्य सन्निहितविषयविनियमितव्यापारत्वात् । मनस्तु यद्यपि सर्वविषयं तथापीन्द्रियगृहीतार्थगोचरत्वेनैव तस्य प्रवृत्तिः । अन्यथान्धबधिराद्यभावप्रसङ्गः । सर्वविषयता तु सकलेन्द्रियगोचरार्थविषयत्वेनैवोच्यते न स्वातन्त्र्येण । योगिप्रत्यक्षेण त्वविनाभावग्रहणेऽनुमेयार्थप्रतिपत्तिरपि[१] ततोऽस्तु । किं तपस्विनाऽनुमानेन । अनुमानात्त्वविनाभावनिश्चयेऽनवस्थेतरेतराश्रयदोषप्रसङ्ग उक्त एव । न च प्रमाणान्तरमेवंविधविषयग्रहणप्रवणमस्तीत्याह—

## ॥ ऊहात्तन्निश्चयः ॥ १-२-११ ॥

ऊहात्तर्कादुक्तलक्षणात्तस्याविनाभावस्य निश्चयः ॥ ११ ॥

लक्षितं परीक्षितं च साधनमिदानीं तद्विभजति—

## ॥ स्वभावः कारणं कार्यमेकार्थसमवायि विरोधि चेति पञ्चधा साधनम् ॥ १-२-१२ ॥

स्वभावादीनि चत्वारि विधेः साधनानि । विरोधि तु निषेधस्येति पञ्चविधं साधनम् । स्वभावो यथा शब्दानित्यत्वे साध्ये

१ रेपीति पाठः ।

कृतकत्वं श्रावणत्वं वा। ननु श्रावणत्वस्यासाधारणत्वात् कथं व्याप्तिसिद्धिः। विपर्यये बाधकप्रमाणबलात् सत्त्वस्येवेति ब्रूमः। न चैवं सत्त्वमेव हेतुः। तद्विशेषस्योत्पत्तिमत्त्वकृतकत्वप्रयत्नानन्तरीयकत्वप्रत्ययभेदभेदित्वादेरहेतुत्वापत्तेः। किं च किमिदमसाधारणत्वं नाम। यदि पक्ष एव वर्तमानत्वं तत्सर्वस्मिन् क्षणिके साध्ये सत्त्वस्यापि समानम्। साध्यधर्मवतः पक्षस्यापि सपक्षता चेत्। इह कः प्रद्वेषः। पक्षादन्यस्यैव सपक्षत्वे लोहलेख्यं वज्रं पार्थिवत्वात्काष्ठवदित्यत्र पार्थिवत्वमपि लोहलेख्यता वज्रे गमयेत्। अन्यथानुपपत्तेरभावान्नेति चेत्। इदमेव तर्हि हेतुलक्षणमस्तु। अपक्षधर्मस्यापि साधनत्वापत्तिरिति चेत्। अस्तु यद्यविनाभावोऽस्ति शकटोदये कृत्तिकोदयस्य सर्वज्ञसद्भावे संवादिनं उपदेशस्य गमकत्वदर्शनात्। काकस्य कार्ष्ण्यं न प्रासादे धावल्यं विना नुपपद्यमानमित्यनैकान्तादगमकम्। तथा घटे चाक्षुषत्वं शब्देऽनित्यता विनाप्युपपद्यमानमिति। तत्र श्रावणत्वादिरसाधारणोऽप्यनित्यता व्यभिचरति। ननु कृतकत्वाच्छब्दस्यानित्यत्वे साध्ये पर्यायवद्द्रव्येऽप्यनित्यता प्राप्नोति। नेयम्। पर्यायाणामेवानित्यतायाः साध्यत्वात्। अनुक्तमपीच्छाविषयीकृतं साध्यं भवतीति किं स्म विस्मरति भवान्। ननु कृतकत्वानित्यत्वयोस्तादात्म्ये साधनवत्साध्यस्य सिद्धत्वं, साध्यवच्च साधनस्य साध्यत्वं प्रसज्जति। सत्यमेतत्। किं तु मोहनिवर्तनार्थः प्रयोगः। यदाह "सादेरपि न सान्तत्वं व्यामोहाद्योऽधिगच्छति। साध्यसाधनतैकस्य तं प्रति स्यान्न दोषभाक्॥" कारणं यथा, वाष्पभावेन मशकवर्तिरूपतया वा सन्दिह्यमाने धूमेऽग्निविशिष्टमेघोन्नतिर्वा दृष्टा प्रथमप्रथमबालगोपालादिपालाङ्गनादिभासि-

१ 'ननु' इति क्वचित्पाठः।
२ 'कृष्ण' इति क्वचित्पाठः।
३ 'गूढ्वे' इति क्वचित्पाठः।

द्धोऽपि नोपलब्धः सूक्ष्मदर्शिनापि न्यायवादिना। कारणविशेषदर्शनाद्धि सर्वः कार्यार्थी प्रवर्तते। स तु विशेषो ज्ञातव्यो योऽव्यभिचारी। कारणत्वनिश्चयादेव प्रवृत्तिरिति चेत्। अस्त्वसौ लिङ्गविशेषनिश्चयः प्रत्यक्षीकृतः[1]। फले तु भाविनि नानुमानादन्यन्निबन्धनमुत्पश्यामः॥ कश्चित् व्यभिचारात् सर्वस्य हेतोरहेतुत्वे कार्यस्यापि तथा प्रसङ्गः। बाष्पदेरकार्यत्वान्नेति चेत्। अत्रापि यद्यतो न भवति न तत्तस्य कारणमित्यदोषः। यथैव हि किंचित् कारणमुद्दिश्य किंचित्कार्यं, तथैव किंचित् कार्यमुद्दिश्य किंचित् कारणम्। यद्वदेवाजनकं प्रति न कार्यत्वं, तद्वदेवाजन्यं प्रति न कारणत्वमिति नानयोः कश्चिद्विशेषः। अपि च रसादेकसामग्र्यनुमानेन रूपानुमानमिच्छता न्यायवादिनेष्टमेव कारणस्य हेतुत्वम्। यदाह "एकसामग्र्यधीनस्य रूपादेरसतो गतिः। हेतुधर्मानुमानेन धूमेन्धनविकारवत्" इति। न च वयमपि यस्य कस्यचित् कारणस्य हेतुत्वं ब्रूमः। अपि तु यस्य न मन्त्रादिना शक्तिप्रतिबन्धो न वा कारणान्तरवैकल्यम्। तत्कुतो विज्ञायत इति चेत्। अस्ति तावद्विगुणितादितरस्य विशेषः। तत्परिज्ञानं तु प्रायः पाशुपादानामप्यस्ति[2]। यदाहुः—"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः। त्वङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः॥१॥ रोलम्बगवलव्यालतमालमलिनत्विषः। वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः॥२॥" इति। कार्यं यथा। वृष्टो विशिष्टनदीपूरः, कृशानौ धूमश्चैतन्ये प्राणादिः। पूरस्य वैशिष्ट्यं कथं ज्ञायत इति चेत्। उक्तमत्र नैयायिकैः[3]। यदाहुः—

---

१ 'प्रत्यक्षत' इति क्वचित्पाठः।

२ पाशुपादा—धूलिधूसरपादा। अनुपदमेवागता प्रकरणानभिज्ञा इत्यर्थः।

३ हरिभद्रसूरिकृतस्य षड्दर्शनसमुच्चयस्य द्वितीयाधिकारे श्लोक २०।

" आवर्तवर्तनाशालिविशालकलुषोदकः । कल्लोलविकटास्फालस्फुटः फेनछटाङ्कितः ॥ १ ॥ वहद्बहलशैवालफलशाद्वलसङ्कुलः। नदीपूरविशेषोऽपि शक्यते न निवेदितुम् ॥ २॥" इति, धूमप्राणादीनामपि कार्यत्वनिश्चयो न दुष्करः। यदाहुः—" कार्यं धूमो हुतभुजः कार्यो धर्मानुवृत्तितः। स भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥ १ ॥ " कारणाभावेऽपि कार्यस्य भावेऽहेतुत्वमन्यहेतुत्वं वा भवेत्। अहेतुत्वे सदा सत्त्वमसत्त्वं वा। अन्यहेतुत्वे दृष्टादन्यतोऽपि भवतो न दृष्टजन्यताऽन्याभावेऽपि दृष्टाद्भवतो नान्यहेतुकत्वमित्यहेतुकतेव स्यात्। तत्र चोक्तम्, "यस्त्वन्यतोऽपि भवन्नुपलब्धो न तस्य धूमत्वं हेतुभेदात् कारणं च वह्निर्धूमस्य" इत्ययुक्तम्, अपि च, अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः। अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत् ॥ १ ॥" इति। तथा चेतना विनानुपपद्यमानः कार्यं प्राणादिरनुमापयति ता श्रावणत्वमिवानित्यताविपर्यये बाधकवशात्सत्त्वस्येवास्यापि व्याप्तिसिद्धेरित्युक्तप्रायम्। तत्र प्राणादिरसाधारणोऽपि चेतना व्यभिचरति। किं च नान्वयो हेतो रूपं तदभावे हेत्वाभासाभावात्। विपक्ष एव सन् विरुद्धो विपक्षेऽप्यनैकान्तिकः सर्वज्ञत्वे साध्ये वक्तृत्वस्यापि व्यतिरेकाभाव एव हेत्वाभासत्वे निमित्तं नान्वयसन्देह इति न्यायवादिनापि व्यतिरेकाभावादेव हेत्वाभासावुक्तौ। असाधारणोऽपि यदि साध्याभावेऽसन्निति निश्चीयेत तदा प्रकारान्तराभावात्साध्यमुपस्थापयन्नानैकान्तिकः स्यात्। अपि च यद्यन्वयो रूपं स्यात्तदा यथा विपक्षैकदेशवृत्तेः

१ 'शक्यते तेन' इत्यपि।

२ 'भावयेत्' इति क्वचित्पाठः।

३ 'भावयेत्' इति क्वचित्पाठः।

कथञ्चिदव्यतिरेकादगमकत्वमेवं सपक्षैकदेशवृत्तेरपि स्यात् कथञ्चिदनन्वयात् । यदाह “ **रूपं यदन्वयो हेतोर्व्यतिरेकवदिष्यते । स सपक्षोभयो न स्यादसपक्षोभयो यथा ॥ १ ॥** ” सपक्ष एव सत्त्वमन्वयो न सपक्षे सत्त्वमेवेति चेत् । अस्तु । स तु व्यतिरेक एवेत्यस्मन्मतमेवाङ्गीकृतं स्यात् । वयमपि हि भत्यपीपदाम । अन्यथानुपपत्त्येकलक्षणो हेतुरिति । तथैकस्मिन्नर्थे दृष्टेऽदृष्टे वा समवाय्याश्रितं साधनं साध्येन । तच्चैकार्थसमवायित्वमेकफलादिगतरूपरसयोः शकटोदयकृत्तिकोदययोश्चन्द्रोदयसमुद्रवृध्योर्वृष्टिसाण्डपिपीलिकाक्षोभयोर्नागवल्लीदाहपत्रकोचयोः । तत्रैकार्थसमवायी रसो रूपस्य, रूपं वा रसस्य । नहि समानकालभाविनोः कार्यकारणभावः सम्भवति । ननु समानकालकार्यजनकं कारणमनुमास्यते इति चेत् । न तर्हि कार्यमनुमितं स्यात् । कारणानुमानेऽसामर्थ्यात् । कार्यमनुमितमेव जन्याभावे जनकत्वाभावादिति चेत् । हन्तैवं कारणं कार्यस्यानुमापकमित्यनिष्टमापद्येत । शकटोदयकृत्तिकोदयादीनां तु यथाविनाभावं साध्यसाधनभावः । यदाह— “ **एकार्थसमवायस्तु यथा येषां तथैव ते । गमकाः गमकस्तत्र शकटः कृत्तिकोदितेः ॥ १ ॥** ” एवमन्येष्वपि साधनेषु वाच्यम् । ननु कृतकत्वानित्यत्वयोरेकार्थसमवायः कस्मान्नेष्यते । न । तयोरेकत्वात् । यदाह “ **आद्यन्तापेक्षिणी सत्ता कृतकत्वमनित्यता । एकैव हेतुः साध्यं च द्वयं नैकाश्रयं ततः ॥ १ ॥** ” इति । स्वभावादीनां चतुर्णां साधनानां विधिसाधनता । निषेधसाधनत्वं तु विरोधिनः । स हि स्वसन्निधानेनेतरस्य प्रतिषेधं साधयति ।

---

१ ‘ चेत् ’ इति क्वचित्पाठः ।

२ ‘ तथाचैकस्मिन्नर्थेदृष्ट्या ’ इति क्वचित्पाठः ।

३ ‘ नागवल्लीदाहपत्रकोथयोः ’ इति क्वचित्पाठः ।

अन्यथा विरोधासिद्धेः । चशब्दो यत एते स्वभावकारणकार्यव्यापका अन्यथानुपपन्नाः स्वसाध्यमुपस्थापयन्ति तत एव तदभावे स्वयं न भवन्ति । तेषामनुपलब्धिरप्यभावसाधनानीत्याह । तत्र स्वभावानुपलब्धिर्यथा । नात्र घटो, द्रष्टुं योग्यस्यानुपलब्धेः । कारणानुपलब्धिर्यथा नात्र धूमोऽग्न्यभावात् । कार्यानुपलब्धिर्यथा । नात्राप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति, धूमाभावात्, व्यापकानुपलब्धिर्यथा । नात्र शिंशपा, वृक्षाभावात् । विरोधि तु प्रतिषेध्यं । तत्तत्कार्यकारणाव्यापकानां च विरुद्धं विरुद्धकार्यम् । यथा न शीतस्पर्शो, नाप्रतिबद्धसामर्थ्यानि शीतकारणानि, न रोमहर्षविशेषाः, न तुषारस्पर्शोऽग्नेर्धूमाद्वेति प्रयोगनानात्वमिति ॥१२॥

साधनं लक्षयित्वा विभज्य च साध्यस्य लक्षणमाह–

## ॥ सिषाधयिषितमसिद्धमबाध्यं साध्यं पक्षः ॥ १–२–१३ ॥

साधयितुमिष्टं सिषाधयिषितम् । अनेन साधयितुमनिष्टस्य साध्यत्वव्यवच्छेदः । यथा वैशेषिकस्य नित्यः शब्द इति शास्त्रोक्तत्वाद्वैशेषिकेणाभ्युपगतस्याप्याकाशगुणत्वादेर्न साध्यत्वं तदा साधयितुमनिष्टत्वात् । इष्टः पुनरनुक्तोऽपि पक्षो भवति । यथा परार्थाश्चक्षुरादयः सङ्घातत्वाच्छयनाशनाद्यङ्गवदित्यत्र परार्थाः । बुद्धिमत्कारणपूर्वकं क्षित्यादि कार्यत्वादित्यत्राऽशरीरसर्वज्ञपूर्वकत्वमिति । असिद्धमित्यनेनानध्यवसायसंशयविपर्ययविषयस्य वस्तुनः साध्यत्वम् । न सिद्धस्य । यथा श्रावणः शब्द इति नानुपलब्धे न निर्णीते न्यायः प्रवर्तत इति हि सर्वपार्षदम् । अबाध्यमित्यनेन

१ 'प्रतिषेध्यस्य तत्कार्यव्यापकानां' इति क्वचित्पाठः ।

२ 'पूर्वक' इति क्वचित्पाठः ।

३ सर्वसमतम् ।

प्रत्यक्षादिबाधितस्य साध्यत्वं मा भूदित्याह--एतत्साध्यस्य लक्षणं पक्ष इति साध्यस्यैव नामान्तरमेतत् ॥१३॥

अबाध्यग्रहणव्यवच्छेद्यां बाधां दर्शयति--

**॥ प्रत्यक्षानुमानागमलोकस्ववचन प्रतीतयो बाधाः ॥ १-२-१४ ॥**

प्रत्यक्षादीनि तद्विरुद्धार्थोपस्थापनेन बाधकत्वात् बाधाः । तत्र प्रत्यक्षबाधा । यथा अनुष्णोऽग्निः, न मधु मधुरं, न सुगन्धि विदलन्मालतीमुकुलम्, अचाक्षुषो घटः, अश्रावणः शब्दः, नास्ति बहिरर्थ इत्यादि । अनुमानबाधा यथा । सरोम हस्ततलं, नित्यः शब्द इति वा । अत्रानुपलम्भेन कृतकत्वेन चानुमानबाधा, । आगमबाधा यथा । प्रेत्यासुखप्रदो धर्म इति परलोके सुखप्रदत्वं धर्मस्य सर्वागमसिद्धम् । लोकबाधा यथा । शुचि नरशिरःकपालमिति । लोके हि नरशिरःकपालादीनामशुचित्वं सुप्रसिद्धम् । स्ववचनबाधा यथा । माता मे वन्ध्येति । प्रतीतिबाधा यथा । अचन्द्रः शशीति । अत्र शशिनश्चन्द्रशब्दवाच्यत्वं प्रतीतिसिद्धमिति प्रतीतिबाधा ॥१४॥

अत्र साध्यं धर्मो, धर्मधर्मिसमुदायो वेति संशयव्यवच्छेदायाह-

**॥ साध्यं साध्यधर्मविशिष्टे धर्मी क्वचित्तु धर्मः ॥ १-२-१५ ॥**

साध्यं साध्यशब्दवाच्यं पक्षशब्दाभिधेयमित्यर्थः । किमित्याह । साध्यधर्मेणानित्यत्वादिना विशिष्टो धर्मी शब्दादिः । एतत्प्रयोगकालापेक्षं साध्यशब्दवाच्यत्वम् । क्वचित्तु व्याप्तिग्रहणकाले धर्मः साध्यशब्देनोच्यते । अन्यथा व्याप्तेरघटनात् । नहि धूमदर्शनात् सर्वत्र पर्वतोऽग्निमानिति व्याप्तिः शक्या कर्तुं प्रमाणविरोधादिति ॥१५॥

धर्मिस्वरूपनिरूपणायाह—

## ॥ धर्मी प्रमाणसिद्धः ॥ १-२-१६॥

प्रमाणैः प्रत्यक्षादिभिः प्रसिद्धो धर्मी भवति। यथाग्निमानयं देशः इत्यत्र हि देशः प्रत्यक्षेण सिद्धः। एतेन सर्व एवानुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन न बहिःसदसत्त्वमपेक्षत इति सौगतं मतं प्रतिक्षिपति। नहीयं विकल्पबुद्धिरन्तर्बहिर्वाऽनासादितालम्बना धर्मिणं व्यवस्थापयति। तदवास्तवत्वे तदाधारसाध्यसाधनयोरपि वास्तवत्वानुपपत्तेः। तद्बुद्धेः पारम्पर्येणापि वस्तुव्यवस्थापकत्वायोगात्। ततो विकल्पेनानेन वा व्यवस्थापितः पर्वतादिर्विषयभावं भजन्नेव धर्मिता प्रतिपद्यते। तथा च सति प्रमाणसिद्धस्य धर्मिता युक्तैव ॥१६॥

अपवादमाह–

## ॥ बुद्धिसिद्धोऽपि ॥ १-२-१७ ॥

नैकान्तेन प्रमाणसिद्ध एव धर्मी भवति किं तु विकल्पबुद्धिप्रसिद्धोऽपि धर्मी भवति। अपिशब्देन प्रमाणबुद्धिभ्यामुभाभ्यामपि सिद्धो धर्मी भवतीति दर्शयति। तत्र बुद्धिसिद्धे धर्मिणि साध्यधर्मः सत्त्वमसत्त्वं च प्रमाणबलेन साध्यते। यथाऽस्ति सर्वज्ञो नास्ति षष्ठं भूतमिति। ननु धर्मिणि साक्षादसति भावाभावोभयधर्माणामसिद्धविरुद्धानैकान्तिकत्वेनानुमानविषयत्वायोगात् कथं सत्त्वासत्त्वयोः साध्यत्वम्। तदाह–" **नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः। विरुद्धधर्मो भावस्य सा सत्ता साध्यते कथम्** ॥ " इति। मैवम्। मानसप्रत्यक्षे भावरूपस्यैव धर्मिणः प्रतिपन्नत्वात्। न च तत्सिद्धौ तत्सत्त्वस्यापि प्रतिपन्नत्वाद्वैयर्थमनुमानम् तदभ्युपेतमपि वैयात्याद्यो न प्रतिपद्यते तं प्रत्यनुमानस्य साफल्यात्। न

च मानसज्ञानात् खरविषाणादेरपि सद्भावसम्भावनातोऽतिप्रसङ्गः। तज्ज्ञानस्य बाधकप्रत्ययविप्लावितसत्ताकवस्तुविषयतया मानसप्रत्यक्षाभासत्वात्। कथं तर्हि षष्ठभूतादेर्धर्मित्वमिति चेत्। धर्मिप्रयोगकाले बाधकप्रत्ययानुदयात्सत्त्वसम्भावनोपपत्तेः। न च सर्वज्ञादौ साधकप्रमाणासत्त्वेन सत्त्वसंशीतिः सुनिश्चिता। असम्भवद्बाधकप्रमाणत्वेन सुखादाविव सत्त्वनिश्चयात्तत्र संशयायोगात्। उभयसिद्धो धर्मी यथा। अनित्यः शब्द इति। नहि प्रत्यक्षेणार्वाग्दर्शिभिरनियतदिग्दर्शिभिर्नियतदिग्देशकालावच्छिन्नाः सर्वे शब्दाः शक्या निश्चेतुमिति शब्दस्य प्रमाणबुद्ध्युभयसिद्धता तेनानित्यत्वादिधर्मः प्रसाध्यत इति ॥ १७ ॥

ननु दृष्टान्तोऽप्यनुमानाङ्गतया प्रतीतः। तत्कथं साध्यसाधने एवानुमानाङ्गमुक्ते न दृष्टान्त इत्याह—

## ॥ न दृष्टान्तोऽनुमानाङ्गम् ॥ १-२-१८ ॥

दृष्टान्तो वक्ष्यमाणलक्षणो नानुमानस्याङ्गं कारणम् ॥ १८ ॥

कुत इत्याह—

## ॥ साधनमात्रात्तत्सिद्धेः ॥ १-२-१९ ॥

दृष्टान्तरहितात्साध्यान्यथानुपपत्तिलक्षणात् साधनादनुमानस्य साध्यप्रतिपत्तिलक्षणस्य भावान्न दृष्टान्तोऽनुमानाङ्गमिति। स हि साध्यप्रतिपत्तौ, वाऽविनाभावग्रहणे, वा व्याप्तिस्मरणे वोपयुज्येत। न तावत् प्रथमः पक्षः। यथोक्तादेव हेतोः साध्यप्रतिपत्तेरुपपत्तेः।

---

१ 'सत्ताकवस्तु' इति क्वचित्पाठ।

२ सद्गीति —सशय।

३ 'सुखादिवच्च' इति क्वचित्पाठ।

४ प्रमाणादुभयासिद्धता।

नापि द्वितीयः । विपक्षे बाधकाविनाभावादेवाविनाभावग्रहणात् । किं च व्यक्तिरूपो दृष्टान्तः । स कथं साकल्येन व्याप्तिं गमयेत् । व्यक्त्यन्तरेषु व्याप्त्यर्थं दृष्टान्तान्तरं मृग्यम् । तस्यापि व्यक्तिरूपत्वेन । साकल्येन व्याप्तेरवधारयितुमशक्यत्वादपरापरदृष्टान्तापेक्षायामनवस्था स्यात् । नापि तृतीयः । गृहीतसम्बन्धस्य साधनदर्शनादेव व्याप्तिस्मृतेः । अगृहीतसम्बन्धस्य दृष्टान्तेऽप्यस्मरणात् । उपलब्धिपूर्वकत्वात् स्मरणस्येति ॥ १९ ॥

दृष्टान्तस्य लक्षणमाह—

॥ स व्याप्तिदर्शनभूमिः ॥ १-२-२० ॥

स इति दृष्टान्तो लक्ष्यं व्याप्तिर्लक्षितरूपा दर्शनं परस्मै प्रतिपादनं तस्य भूमिराश्रय इति लक्षणम् । ननु यदि दृष्टान्तोऽनुमानाङ्गं न भवति तर्हि किमर्थं लक्ष्यते । उच्यते । परार्थानुमाने बोध्यानुरोधादर्पदादिकस्योदाहरणस्यानुज्ञास्यमानत्वात् । तस्य च दृष्टान्ताभिधानरूपत्वादुपपन्नं दृष्टान्तस्य लक्षणम् । प्रमातुरपि कस्यचित् दृष्टान्तदृष्टबहिर्व्याप्तिबलेनान्तर्व्याप्तिप्रतिपत्तिर्भवतीति स्वार्थानुमानपर्वण्यपि दृष्टान्तलक्षणं नानुपपन्नम् ॥ २० ॥

तद्विभागमाह—

॥ स साधर्म्यवैधर्म्याभ्यां द्वेधा ॥ १-२-२१ ॥

स दृष्टान्तः साधर्म्येणान्वयेन वैधर्म्येण च व्यतिरेकेण भवतीति द्विप्रकारः ॥ २१ ॥

साधर्म्यदृष्टान्तं विभजते ।

॥ साधनधर्मप्रयुक्तसाध्यधर्मयोगी साधर्म्यदृष्टान्तः ॥ १-२-२२ ॥

---

१ 'बाधकाविनाभावग्रहणात्' इति क्वचित्पाठः ।
२ 'अवयवादिकस्य' इति क्वचित्पाठः ।

साधनधर्मेण प्रयुक्तो न तु काकतालीयो यः साध्यो धर्मस्तद्वान् साधर्म्यदृष्टान्तः । यथा कृतकत्वेनानित्ये शब्दे साध्ये घटादिः॥२२॥

वैधर्म्यदृष्टान्तं व्याचष्टे ।

## ॥ साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तियोगी वैधर्म्यदृष्टान्तः ॥ १-२-२३ ॥

साध्यधर्मनिवृत्त्या प्रयुक्ता न यथाकथंचिद्या साधनधर्मनिवृत्तिस्तद्वान् वैधर्म्यदृष्टान्तः । यथा कृतकत्वेनानित्ये शब्दे साध्ये आकाशादिरिति ॥ २३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ॥

## ॥ प्रथमोऽध्यायः समाप्तः ॥

लक्षितं स्वार्थमनुमानमिदानीं क्रमप्राप्तं परार्थमनुमानं लक्षयति–

## ॥ यथोक्तसाधनाभिधानजः परार्थम् २-१-१ ॥

यथोक्तं सुनिश्चितसाध्याविनाभावैकलक्षणं यत्साधनं तस्याभिधानम् । अभिधीयते परस्मै प्रतिपाद्यते अनेनेत्यभिधानं वचनं तस्माज्जातः सम्यगर्थनिर्णयः परार्थमनुमानं परोपदेशापेक्षं साध्यविज्ञानमित्यर्थः ॥ १ ॥

ननु वचनं परार्थमनुमानमित्याहुस्तत्कथमित्याह–

## ॥ वचनमुपचारात् ॥२-१-२॥

अचेतनं हि वचनं न साक्षात्प्रमितिफलहेतुरिति न निरुपचरित-

---

१ काकागमनमिव तालीपतनमिवेति काकतालीयं । अयमर्थः । यथा तालवृक्षस्याधस्तात् यदृच्छया काकस्यागमनं तत्पुरस्तात् तालफलस्य पतनमयत्नतस्तस्य फलस्य विभेदी दूरपतितत्वात् । ततश्च काकेन तत्फलभक्षणम् । एता सर्वा क्रिया अयत्नत एव समभूवन्तद्वदिति ।

प्रमाणभावभाजनं मुख्यानुमानहेतुत्वेन तूपचरितानुमानाभिधानपात्रतां प्रतिपद्यते उपचारश्चात्र कारणे कार्यस्य यथोक्तसाधनाभिधानात् तद्विषया स्मृतिरुत्पद्यते स्मृतेश्चानुमानं तस्मादनुमानस्य परम्परया यथोक्तसाधनाभिधानं कारणं तस्मिन् कारणे वचने कार्यस्यानुमानस्योपचारः समारोपः क्रियते ततः समारोपात् कारणं वचनमनुमानशब्देनोच्यते कार्ये वा प्रतिपादकानुमानजन्ये वचने कारणस्यानुमानस्योपचारः वचनमौपचारिकमनुमानं न मुख्यमित्यर्थः। इह च मुख्यार्थबाधे प्रयोजने निमित्ते चोपचारः प्रवर्तते तत्र मुख्योऽर्थः साक्षात्प्रमितिफलः सम्यगर्थनिर्णयः प्रमाणशब्दः सामानाधिकरण्यं परार्थानुमानशब्दस्य तस्य बाधो वचनस्य निर्णयत्वानुपपत्तेः। प्रयोजनमनुमानावयवाः प्रतिज्ञादय इति शास्त्रे व्यवहार एव निर्णयात्मन्यनंशे तद्व्यवहारानुपपत्तेः। निमित्तं तु निर्णयात्मकानुमानहेतुत्वं वचनस्येति ॥ २ ॥

॥ तद् द्वेधा ॥ २-१-३ ॥

तद्वचनात्मकं परार्थानुमानं द्वेधा द्विप्रकारम् ॥ ३ ॥

प्रकारभेदमाह—

॥ तथोपपत्त्यन्यथानुपपत्तिभेदात् ॥ २-१-४ ॥

तथा साध्ये सत्येवोपपत्तिः साधनस्येत्येकः प्रकारः। अन्यथा साध्याभावेऽनुपपत्तिश्चेति द्वितीयः प्रकारः। यथाऽग्निमानयं पर्वतस्तथैव धूमवत्त्वोपपत्तेः। अन्यथा धूमवत्त्वानुपपत्तेर्वा। एतावन्मात्रकृतः परार्थानुमानस्य भेदो न पारमार्थिक इति भेदपदेन दर्शयति ॥४॥

एतदेवाह।

॥ नानयोस्तात्पर्ये भेदः ॥ २-१-५ ॥

अनयोस्तथोपपत्त्यन्यथानुपपत्तिरूपयोः प्रयोगप्रकारयोस्तात्पर्यं 'यत्परः शब्दः स शब्दार्थः' इत्येवं लक्षणे तत्परत्वे भेदो

विशेषः। एतदुक्तं भवत्यन्यदभिधेयं शब्दस्यान्यत्प्रकाश्यं प्रयोजनं तत्राभिधेयापेक्षया वाचकत्वं भिद्यते। प्रकाश्यं त्वभिन्नमन्वये कथिते व्यतिरेकगतिर्व्यतिरेके चान्वयगतिरित्युभयत्रापि साधनस्य साध्याविनाभावः प्रकाश्यते। न च यत्राभिधेयभेदस्तत्र तात्पर्यभेदोऽपि। नहि पीनो देवदत्तो दिवा न भुङ्क्ते पीनो देवदत्तो रात्रौ भुङ्क्ते इत्यनयोर्वाक्ययोरभिधेयभेदोऽस्तीति तात्पर्येणापि भेत्तव्यमिति भावः ॥५॥

तात्पर्याभेदस्यैव फलमाह—

## ॥ अत एव नोभयोः प्रयोगः ॥ २-१-६ ॥

यत एव नानयोस्तात्पर्ये भेदोऽत एव नोभयोर्यथोपपत्त्यन्यथानुपपत्त्योर्युगपत्प्रयोगो युक्तः। व्याप्त्युपदर्शनाय हि तथोपपत्त्यन्यथानुपपत्तिभ्यां हेतोः प्रयोगः क्रियते व्याप्त्युपदर्शनं चैकयैव सिद्धमिति विफलो द्वयोः प्रयोगः यदाह, "[1]**हेतोस्तथोपपत्त्या वा, स्यात्प्रयोगोऽन्यथापि वा। द्विविधोऽन्यतरेणापि, साध्यसिद्धिर्भवेदिति**" ॥ ६ ॥

ननु यद्येकेनैव प्रयोगेण हेतोर्व्याप्त्युपदर्शनं कृतमिति कृतं विफलेन द्वितीयप्रयोगेण तर्हि प्रतिज्ञाया अपि माभूत् प्रयोगो विफलत्वात्। नहि प्रतिज्ञामात्रात् कश्चिदर्थं प्रतिपद्यते। तथा सति हि विप्रतिपत्तिरेव न स्यादित्याह—

## ॥ विषयोपदर्शनार्थं तु प्रतिज्ञा ॥ २-१-७ ॥

विषयो यत्र तथोपपत्त्यान्यथानुपपत्त्या वा हेतुः स्वसाधनाय[2] प्रार्थ्यते तस्योपदर्शनं परप्रतीतावारोपण तदर्थं पुनः प्रतिज्ञा प्रयोक्तव्येति शेषः। अयमर्थः। परप्रत्यायनाय वचनमुच्चारयता प्रेक्षावता तदेव परे बोधयितव्या यद्बुभुत्सन्ते। तथा सत्यनेन बुभुत्सिताभि-

१ न्यायावतार श्लोक १७।

२ 'स्वसाध्यसाधनाय' इति क्वचित्पाठ।

धायिना परे बोधिता भवन्ति । न खल्वश्वान् पृष्टो गवयान् ब्रुवाणः प्रष्टुरवधेयवचनो भवति । अनवधेयवचनश्च कथं प्रतिपादको नाम । यथा च शैक्षो भिक्षुणाचचक्षे । भोः शैक्ष पिण्डपानमाहरेति स एवमाचरामीत्यनभिधाय यदा तदर्थं प्रयतते तदाऽस्मै क्रुध्यति भिक्षुराः शिष्याभास भिक्षुखेटास्मानवधीरयसीति विब्रुवाणः । एवमनित्यं शब्दं बुभुत्समानायानित्यः शब्द इति विषयमनुपदर्श्य यदेव किंचिदुच्यते कृतकत्वादिति वा । यत्कृतकं तदनित्यमिति वा । कृतकत्वस्य तथैवोपपत्तेरिति वा । कृतकत्वस्यान्यथानुपपत्तिरिति वा । तत्सर्वमस्यानपेक्षितमापाततोऽसम्बधाभिधानबुध्या । तथा चानवहितो न श्रोतुमर्हतीति । यत्कृतकं तत्सर्वमनित्यं यथा घटः । कृतश्च शब्द इति वचनमर्थसामर्थ्येनैवापेक्षितशब्दानित्यत्वनिश्चायकमित्यवधानमर्हतीति चेत् । न । परस्पराश्रयात् । अवधाने हि सत्यतोऽर्थे निश्चयः तस्माच्चावधानामिति । न च पर्यत्मतिवादिनौ प्रमाणीकृतवादिनौ यदेतद्वचनसम्बन्धाय प्रयतिष्येते तथा सति न हेत्वाद्यपेक्षया तां तद्वचनादेव तदर्थनिश्चयात् । अनित्यः शब्द इति त्वपेक्षित उक्ते कुत इत्याशङ्कायां कृतकत्वस्य तथैवोपपत्तेः कृतकत्वस्यान्यथानुपपत्तेर्वेत्युपातिष्ठते तदिदं विषयोपदर्शनार्थत्वं प्रतिज्ञाया इति॥७॥

ननु यत्कृतकं तदनित्यं यथा घटः । कृतकश्च शब्दः इत्युक्ते गम्यत एतदनित्यः शब्दः इति तस्य सामर्थ्यलब्धत्वात् तथापि तद्वचने पुनरुक्तत्वमसङ्गात्, अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् । आह च डिंडिकरागं परित्यज्याक्षिणी निमील्य चिन्तय तावत् किमियता मैद्रुक्तेन प्रतीतिः स्यान्नवेति भावे किं प्रपञ्चमालयेत्याह—

१ ' तद्वचनादेव ' इति क्वचित्पाठ. ।

२ डिडिको नाम रक्तवर्णो मूषकविशेष. । तद्वत् राग रक्तिमा नेत्रगता परित्यज्य नेत्रे विमर्लीकृत्येत्यर्थ ।

३ " वानित्यत्वस्य ' इति क्वचित्पाठ. ।

॥ गम्यमानत्वेऽपि साध्यधर्माधारसन्देहापनोदाय धर्मिणि पक्षधर्मोपसंहारवत्तदुपपत्तिः ॥२-१-८॥

साध्यमेव धर्मस्तस्याधारस्तस्य सन्देहस्तदपनोदाय कृतकः सोऽनित्य इत्युक्तेपि धर्मिविषयसन्देह एव किमनित्यः शब्दो घटो वेति तन्निराकरणाय गम्यमानस्यापि साध्यस्य निर्देशो युक्तः। साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवचनवत्। तथाहि साध्यव्याप्तसाधनदर्शनेन तदाधारावगतावपि नियतधर्मिसम्बन्धितामदर्शनार्थं कृतकश्च शब्द इति पक्षधर्मोपसंहारवचनं तथा साध्यस्य विशिष्टधर्मिसम्बन्धितावबोधनाय प्रतिज्ञावचनमप्युपपद्यत एवेति ॥ ८ ॥

ननु प्रयोगं प्रति विप्रतिपद्यंते वादिनः। तथाहि, प्रतिज्ञाहेतूदाहरणानीति त्र्यवयवमनुमानमिति साङ्ख्याः। सहोपनयेन चतुरवयवमिति **मीमांसकाः**। सहनिगमनेन पञ्चावयवमिति नैयायिकाः। तदेवं प्रतिपत्तौ कीदृशोऽनुमानप्रयोग इत्याह—

॥ एतावान् प्रेक्षप्रयोगः ॥ २-१-९ ॥

एतावानेव यदुत तथोपपत्त्यान्यथानुपपत्त्या वा युक्तं साधनं प्रतिज्ञा च प्रेक्षाय प्रेक्षावते प्रतिपाद्याय तदवबोधनार्थः प्रयोगो न त्वधिकः यथाहुः **सांख्यादयः**। नापि हीनो यथाहुः **सौगताः**। विदुषा वाच्यो हेतुरेव हि केवल इति ॥ ९ ॥

ननु परार्थप्रवृत्तैः कारुणिकैर्यथाकथञ्चित् परे बोधयितव्या नास-

१ 'यथाहि' इति क्वचित्पाठ।

२ ५ गाल्यकारिकाया माठरवृत्तौ चोक्तोऽर्थ।

३ गौ सू १।१।३२ इत्यत्रोक्तोर्थ।

व्यवस्थोपन्यासैरमीषां प्रतीतिभङ्गः करणीयस्तत्किमुच्यते एतावान् प्रेक्षप्रयोग इत्याशङ्क्य द्वितीयमपि प्रयोगक्रममुपदर्शयति–

## ॥ बोध्यानुरोधात्प्रतिज्ञाहेतूदाहरणोपनयननिगमनानि पञ्चापि ॥ २–१–१० ॥

बोध्यः शिष्यस्तदनुरोधस्तदवबोधनप्रतिज्ञापारतन्त्र्यं तस्मात् प्रतिज्ञादीनि पञ्चापि प्रयोक्तव्यानि । एतानि चावयवसंज्ञया प्रोच्यन्ते । यदक्षपादः "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" इति । अपिशब्दात् प्रतिज्ञादीनां शुद्धयश्च पञ्च बोध्यानुरोधात् प्रयोक्तव्याः । यतश्रीभद्रबाहुस्वामिपूज्यपादाः "कत्थइ पञ्चावयवं दसहा वा सव्व हा ण पडिकुट्ठंति" ॥ १० ॥

तत्र प्रतिज्ञाया लक्षणमाह–

## ॥ साध्यनिर्देशः प्रतिज्ञा ॥२–१–११ ॥

साध्यं सिषाधयिषितधर्मविशिष्टो धर्मी, निर्दिश्यते अनेनेति निर्देशो वचनं, साध्यस्य निर्देशः साध्यनिर्देशः प्रतिज्ञा प्रतिज्ञायतेऽनयेति कृत्वा यथायं प्रदेशोऽग्निमानिति॥ ११ ॥

हेतुं लक्षयति–

## ॥ साधनत्वाभिव्यञ्जकविभक्त्यन्तं साधनवचनं हेतुः ॥२–१–१२॥

साधनत्वाभिव्यञ्जिका विभक्तिः पञ्चमी तृतीया वा तदन्तंसाधनस्योक्तलक्षणस्य वचनं हेतुः । धूम इत्यादिरूपस्य हेतुत्वनिराकर-

१ ' प्रतिभामङ्ग १ । इति क्वचित्पाठ ।

२ गौतमसूत्र १–१–३२ ।

३ दशवैकालिकसूत्रोपरि हरिभद्रीय बृहद्वृत्ति अध्ययन १ गाथा १ ।

४ ' तदन्त ' इति क्वचित्पाठ ।

णाय प्रथमं पदम् । अव्याप्तवचने हेतुत्वनिराकरणाय द्वितीयमिति । स द्विविधस्तथोपपत्त्यन्यथानुपपत्तिभ्याम्, तद्यथा धूमस्य तथैवोपपत्तेर्धूमस्यान्यथानुपपत्तेर्वेति ॥ १२ ॥

उदाहरणं लक्षयति–

॥ दृष्टान्तवचनमुदाहरणम् ॥२-१-१३॥

दृष्टान्त उक्तलक्षणस्तत्प्रतिपादकं वचनमुदाहरणं तदपि द्विविधं दृष्टान्तभेदात् साधनधर्मप्रयुक्तसाध्यधर्मयोगी साधर्म्यदृष्टान्तस्तस्य वचनं साधर्म्योदाहरणम्, यथा यो धूमवान् सोऽग्निमान् यथा महानसप्रदेशः साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तियोगी वैधर्म्यदृष्टान्तस्तस्य वचनं वैधर्म्योदाहरणम्, यथा योऽग्निनिवृत्तिमान् स धूमनिवृत्तिमान् यथा जलाशयप्रदेश इति ॥ १३ ॥

उपनयलक्षणमाह–

॥ धर्मिणि साधनस्योपसंहार उपनयः ॥२-१-१४॥

दृष्टान्तधर्मिणि विप्रसृतस्य साधनधर्मस्य साध्यधर्मिणि य उपसंहारः स उपनयः उपसंह्रियतेऽनेनोपनीयतेऽनेनेतिवचनरूपः, यथा धूमवांश्चायमिति ॥ १४ ॥

निगमनं लक्षयति–

॥ साध्यस्य निगमनम् ॥२-१-१५॥

साध्यधर्मस्य धर्मिण्युपसंहारो निगम्यते पूर्वेषामवयवानामर्थोऽनेनेति निगमनम्, यथा तस्मादग्निमानिति । एते नान्तरीयकत्वप्रतिपादका वाक्यैकदेशरूपाः पञ्चावयवाः । एतेषामेव शुद्धयः पञ्च । यतो न शङ्कितसमारोपितदोषाः पञ्चाप्यवयवाः स्वां स्वामनादिनघामर्थविषयां धियमाधातुमलमिति प्रतिज्ञादीनां तं तं दोषमाशङ्क्य तत्तत्परिहाररूपाः पञ्चैव शुद्धयः प्रयोक्तव्या इति दशावयवमिदमनुमानवाक्यं बोध्यानुरोधात् प्रयोक्तव्यमिति ॥ १५ ॥

इह शास्त्रे येषां लक्षणमुक्तं तल्लक्षणाभावे तदाभासाः सुप्रसिद्धा एव । यथा प्रमाणसामान्यलक्षणाभावे संशयविपर्ययानध्यवसायाः प्रमाणाभासाः, संशयादिलक्षणाभावे संशयाद्याभासाः, प्रत्यक्षलक्षणाभावे प्रत्यक्षाभासः, परोक्षान्तर्गतानां स्मृत्यादीनां स्वस्वलक्षणाभावे तत्तदाभासतेत्यादि । एवं हेतूनामपि स्वलक्षणाभावे हेत्वाभासता सुज्ञानैव । केवलं हेत्वाभासानां सङ्ख्यानियमः प्रतिव्यक्तिनियतं लक्षणं च नैपत्करमतिपत्तीति तल्लक्षणार्थमाह–

**॥ असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ॥ २–१–१६ ॥**

अहेतवो हेतुवदाभासमाना हेत्वाभासा असिद्धादयः । यद्यपि साधनदोषा एवैते दुष्टे साधने तदभावात् तथापि साधनाभिधायके हेतावुपचारात् पूर्वाचार्यैरभिहितास्ततस्तत्प्रसिद्धिबाधामनाश्रयद्भिरस्माभिरपि हेतुदोषत्वेनैवोच्यन्त इति । त्रय इति संङ्ख्यान्तरव्यवच्छेदार्थम् । तेन कालातीतप्रकरणसमयोर्व्यवच्छेदः । तत्र कालातीतस्य पक्षदोषेष्वन्तर्भावः।"प्रत्यक्षागमबाधितधर्मिनिर्देशानन्तरप्रयुक्तः कालात्ययापदिष्ट" इति हि तस्य लक्षणमिति । यथाऽनुष्णस्तेजोऽवयवी कृतकत्वाद् घटवदिति। प्रकरणसमस्तु न सम्भवत्येव। नह्यस्ति सम्भवो यथोक्तलक्षणेऽनुमाने प्रयुक्तेऽदूषिते वाऽनुमानान्तरस्य। यत्तूदाहरणमनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वादित्येकेनोक्ते द्वितीय आह नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वादिति । तदती वासाम्प्रतम्। को हि चतुरङ्गसभायां वादी प्रतिवादी चैवंविधमस-

१ न किंचिदुपयोगी । अपित्वत्यन्तोपयोगीत्यर्थ ।

२ 'चानुमानान्तरस्य' इति पाठ ।

३ वादी १ प्रतिवादी २ तटस्था ३ मध्यस्थ ४ इतिचतुरवयवविशिष्टा सभा । साधु १ साध्वी २ श्रावक ३ श्राविका ४ इत्यपि पारिभाषिक चतुरङ्गसभाया अर्थ । पर सोऽत्र वादसभायामनुपयुक्त ।

म्यद्धमनुन्मत्तोऽभिदधीतेति ॥ १६ ॥

तत्रासिद्धस्य लक्षणमाह—

**॥ नासन्नानिश्चितसत्त्वो वाऽन्यथानुपपन्न इति सत्त्वस्यासिद्धौ सन्देहे वाऽसिद्धः ॥२-१-१७॥**

असन्नविद्यमानो नान्यथानुपपन्नः इति सत्त्वस्यासिद्धौ असिद्धो हेत्वाभासः स्वरूपासिद्ध इत्यर्थः । यथा नित्यः शब्दश्चाक्षुषत्वादिति । अपक्षधर्मत्वादयमसिद्ध इति न मन्तव्यमित्याह नान्यथानुपपन्न इति अन्यथानुपपत्तिरूपहेतुत्वलक्षणविरहादयमसिद्धो नापक्षधर्मत्वात् नहि पक्षधर्मत्वं हेतोर्लक्षणं तदभावेप्यन्यथानुपपत्तिबलाद्धेतुत्वोपपत्तेरित्युक्तमायम् ॥ भट्टोप्याह " **पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा । सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते ॥** " इति । तथाऽनिश्चितसत्त्वः सान्दिग्धसत्त्वो नान्यथानुपपन्न इति सत्वस्य सन्देहेप्यसिद्धो हेत्वाभासः सान्दिग्धासिद्ध इत्यर्थः । यथा बाष्पादिभावेन सन्दिह्यमाना धूमलताग्निसिद्धावुपदिश्यमाना यथा वात्मनः सिद्धावपि सर्वगतत्वे साध्ये सर्वत्रोपलभ्यमानगुणत्वं प्रमाणाभावादिति ॥ १७ ॥

असिद्धप्रभेदानाह—

**॥ वादिप्रतिवाद्युभयभेदाच्चैतद्भेदाः ॥ २-१-१८ ॥**

वादी पूर्वपक्षस्थितः प्रतिवाद्युत्तरपक्षस्थितः उभयं द्वावेव वादिप्रतिवादिनौ । तद्भेदादसिद्धस्य भेदस्तत्र वाद्यसिद्धो यथा परिणामी शब्द उत्पत्तिमत्त्वात् अयं साङ्ख्यस्य स्वयं वादिनोऽसिद्धः । तन्मते उत्पत्तिमत्त्वस्यानभ्युपेतत्वात् नासदुत्पद्यते नापि सद्विनश्यत्युत्पादविनाशयोराविर्भावतिरोभावरूपत्वादिति तत्सिद्धान्ताच्च ।

१ 'भेदः' इत्यपि क्वचित्पाठः ।

चेतनास्तरवः सर्वत्वगपहरणे मरणात्। अत्र मरणं विज्ञानेन्द्रियायुर्निरोधलक्षणं तरुषु बौद्धस्य प्रतिवादिनोऽसिद्धम्। उभयासिद्धस्तु चाक्षुषत्वमुक्तमेव। एवं सन्दिग्धासिद्धोऽपि वादिप्रतिवाद्युभयभेदात् त्रिविधो बोद्धव्यः॥ १८॥

नन्वन्येऽपि विशेष्यासिद्धादयो हेत्वाभासाः कैश्चिदिष्यन्ते ते कस्मान्नोक्ता इत्याह–

॥ विशेष्यासिद्धादीनामेष्वेवान्तर्भावः॥ २–१–१९॥

एष्वेव वादिप्रतिवाद्युभयासिद्धेष्वेव। तत्र विशेष्यासिद्धादय उदाह्रियन्ते। विशेष्यासिद्धो यथाऽनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्। विशेषणासिद्धो यथाऽनित्यः शब्दश्चाक्षुषत्वे सति सामान्यविशेषवत्त्वात्। भागासिद्धो यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। आश्रयासिद्धो यथाऽस्ति प्रधानं विश्वपरिणामित्वात्। आश्रयैकदेशासिद्धो यथा नित्याः प्रधानपुरुषेश्वराः अकृतकत्वात्। व्यर्थविशेष्यासिद्धो यथा नित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात्। व्यर्थविशेषणासिद्धो यथाऽनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात्। सन्दिग्धविशेष्यासिद्धो यथा अद्यापि रागादियुक्तः कपिलः पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्। सन्दिग्धविशेषणासिद्धो यथा अद्यापि रागादियुक्तः कपिलः सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वादित्यादि। एतेऽसिद्धभेदा यदान्यतरवाद्यसिद्धत्वेन विवक्ष्यन्ते तदा वाद्यसिद्धाः प्रतिवाद्यसिद्धावाद्य वा भवन्ति, यदोभयवाद्यसिद्धत्वेन विवक्ष्यन्ते तदोभयासिद्धा भवन्ति॥ १९॥

विरुद्धस्य लक्षणमाह–

। विपरीतनियमाऽन्यथैवोपपद्यमानो विरुद्धः। २-१-२०।

विपरीतो यथोक्ताद्विपर्यस्तो नियमोऽविनाभावो यस्य स तथा

तस्यैवोपदर्शनमन्यथैवोपपद्यमान इति । यथा नित्यः शब्दः कार्यत्वात् परार्थाश्चक्षुरादयः सङ्घातत्वाच्छयनासनाद्यङ्गवदित्यत्रासंहतपारार्थ्ये साध्ये चक्षुरादीनां संहतत्वं विरुद्धम् । बुद्धिमत्पूर्वकं क्षित्यादि कार्यत्वादित्यत्राशरीरसर्वज्ञकर्तृपूर्वकत्वे साध्ये कार्यत्वं विरुद्धसाधनाद्विरुद्धम् । अनेन येऽन्येरन्ये विरुद्धा उदाहृतास्तेऽपि सङ्गृहीताः । यथा सति सपक्षे चत्वारो भेदाः । पक्षविपक्षव्यापको यथा नित्यः शब्दः कार्यत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथाऽनित्या पृथ्वी कृतकत्वात् । पक्षविपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः प्रयत्नानन्तरीयकत्वात् । असति सपक्षे चत्वारो विरुद्धाः । पक्षविपक्षव्यापको यथा आकाशविशेषगुणः शब्दः प्रमेयत्वात् । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा आकाशविशेषगुणः शब्दो बाह्येन्द्रियग्राह्यत्वात् । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा आकाशविशेषगुणः शब्दोऽपदात्मकत्वात् । पक्षविपक्षैकदेशवृत्तिर्यथा आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वात् । एषु च चतुर्षु विरुद्धता पक्षैकदेशवृत्तिषु चतुर्षु पुनरसिद्धता विरुद्धता चेत्युभयसमावेश इति ॥ २० ॥

अनैकान्तिकस्य लक्षणमाह—

**॥ नियमस्यासिद्धौ सन्देहे वाऽन्यथाप्युपपद्यमानोऽनैकान्तिकः ॥ २-१-२१ ॥**

नियमोऽविनाभावस्तस्यासिद्धावनैकान्तिको यथाऽनित्यः शब्दः प्रमेयत्वात् प्रमेयत्वं नित्येऽप्याकाशादावस्तीति । सन्देहे यथा सर्वज्ञः कश्चिद्रागादिमान् वा वक्तृत्वात् । स्वभावविप्रकृष्टाभ्यां हि सर्वज्ञत्व वीतरागत्वाभ्यां हि न वक्तृत्वस्य विरोधः सिद्धः । न च रागादिकार्यं वचनमिति सन्दिग्धोऽन्वयः । ये चान्येऽन्यैरनैकान्तिकभेदा

उदाहृतास्त उक्तलक्षण एवान्तर्भवन्ति। पक्षत्रयव्यापको यथाऽनित्यः शब्दः प्रमेयत्वात्। पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा गौरयं विषाणित्वात्, पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा नायं गौरविषाणित्वात्। पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथाऽनित्यः शब्दः प्रत्यक्षत्वात्। पक्षैकदेशवृत्तिः सपक्षविपक्षव्यापको यथा न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात्। पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापी यथा न द्रव्याणि दिक्कालमनांस्यमूर्तत्वात्। पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापी। यथा द्रव्याणि दिक्कालमनांस्यमूर्तत्वात्। पक्षत्रयैकदेशवृत्तिर्यथाऽनित्या पृथ्वी प्रत्यक्षत्वादिति ॥ २१ ॥

उदाहरणदोषानाह–

॥ साधर्म्यवैधर्म्याभ्यामष्टावष्टौ दृष्टान्ताभासाः ॥ २–१–२२ ॥

परार्थानुमानप्रस्तावादुदाहरणदोषा एवैते दृष्टान्तप्रभवत्वात्तु दृष्टान्तदोषा इत्युच्यन्ते। दृष्टान्तस्य च साधर्म्यवैधर्म्यभेदेन द्विविधत्वात् प्रत्येकमष्टावष्टौ दृष्टान्तवदाभासमाना दृष्टान्ताभासा भवन्ति ॥ २२ ॥

तानेवोदाहरति विभजति च–

॥ अमूर्तत्वेन नित्ये शब्दे साध्ये कर्मपरमाणुघटाः साध्यसाधनोभयविकलाः ॥ २–१–२३ ॥

नित्यः शब्दोऽमूर्तत्वादित्यस्मिन् प्रयोगे कर्मादयो यथासङ्ख्यं साध्यादिविकलाः। तत्र कर्मवदिति साध्यविकलः अनित्यत्वात् कर्मणः। परमाणुवदिति साधनविकलः मूर्तत्वात् परमाणूनाम्। घटवदिति साध्यसाधनोभयविकलः अनित्यत्वान्मूर्तत्वाच्च घटस्येति। इति त्रयः[1] साधर्म्यदृष्टान्ताभासाः ॥ २३ ॥

१ 'प्रयोऽपि' इति क्वचित्पाठः।

## ॥ वैधर्म्येण परमाणुकर्माकाशाः साध्याद्यव्यतिरेकिणः ॥ २-१-२४ ॥

नित्यः शब्दोऽमूर्त्तत्वादित्यस्मिन्नेव प्रयोगे परमाणुकर्माकाशाः साध्यसाधनोभयाव्यतिरेकिणो दृष्टान्ताभासा भवन्ति यन्नित्यं न भवति तदमूर्तमपि न भवति यथा परमाणुरिति साध्याव्यतिरेकी नित्यत्वात् परमाणूनाम् । यथा कर्मेति साधनाव्यावृत्तः अमूर्त्तत्वात् कर्मणः । यथाकाशमित्युभयाव्यावृत्तः नित्यत्वादमूर्त्तत्वाच्चाकाशस्येति त्रय एव वैधर्म्यदृष्टान्ताभासाः ॥ २४ ॥

तथा —

## ॥वचनाद्रागे रागान्मरणधर्मत्वकिंचिज्ज्ञत्वयोः सन्दिग्धसाध्याद्यन्वयव्यतिरेका रथ्यापुरुषादयः ॥२-१-२५॥

सन्दिग्धसाध्यसाधनोभयान्वयाः सन्दिग्धसाध्यसाधनोभयव्यतिरेकाश्च त्रयस्त्रयो दृष्टान्ताभासा भवन्ति । क इत्याह, रथ्यापुरुषादयः कस्मिन् साध्ये रागे मरणधर्मकिंचिज्ज्ञत्वयोश्च । कस्मादित्याह वचनाद्रागाच्च । तत्र सन्दिग्धसाध्यधर्मान्वयो यथा विवक्षितः पुरुषविशेषो रागी वचनाद्रथ्यापुरुषवत् । सन्दिग्धसाधनधर्मान्वयो यथा मरणधर्मायं रागाद्रथ्यापुरुषवत् । सन्दिग्धोभयधर्मान्वयो यथा किंचिज्ज्ञोऽयं रागाद्रथ्यापुरुषवदिति । एषु परचेतोवृत्तीनां दुरधिगमत्वेन साधर्म्यदृष्टान्ते रथ्यापुरुषे रागकिंचिज्ज्ञत्वयोः सत्त्वं सन्दिग्धम् । तथा सन्दिग्धसाध्यव्यतिरेको यथा रागी वचनाद्रथ्यापुरुषवत् । सन्दिग्धसाधनव्यतिरेको यथा मरणधर्मायं रागाद्रथ्यापुरुषवत् । सन्दिग्धोभयव्यतिरेको यथा किंचिज्ज्ञोऽयं रागाद्रथ्यापुरुषवत् । एषु पूर्ववत् परचेतोवृत्तेर्दुरन्वयत्वाद्वैधर्म्यदृष्टान्ते रथ्यापुरुषे रागकिंचिज्ज्ञत्वयोरसत्त्वं सन्दिग्धमिति ॥ २५ ॥

तथा —

## ॥ विपरीतान्वयव्यतिरेकौ ॥ २-१-२६ ॥

विपरीतान्वयो विपरीतव्यतिरेकश्च दृष्टान्ताभासो भवतः। तत्र विपरीतान्वयो यथा यत्कृतकं तदनित्यमिति वक्तव्ये यदनित्यं तत्कृतकं यथा घट इत्याह। विपरीतव्यतिरेको यथा अनित्यत्वाभावे न भवत्येव कृतकत्वमिति वक्तव्ये कृतकत्वाभावे न भवत्येवानित्यत्वं यथाकाश इत्याह। साधनधर्मानुवादेन साध्यधर्मस्य विधानमित्यन्वयः। साध्यधर्मव्यावृत्त्यनुवादेन साधनधर्मव्यावृत्तिविधानमिति व्यतिरेकः। तयोरन्यथाभावो विपरीतत्वम्, यदाह "साध्यानुवादाल्लिङ्गस्य विपरीतान्वयो विधिः। हेत्वभावे त्वसत्साध्यं व्यतिरेकविपर्ययं" इति ॥ २६ ॥

तथा —

## ॥ अप्रदर्शितान्वयव्यतिरेकौ ॥ २-१-२७ ॥

अप्रदर्शितान्वयोऽप्रदर्शितव्यतिरेकश्च दृष्टान्ताभासो। एतौ च प्रमाणस्यानुपदर्शनाद्भवतो न तु वीप्सा सर्वावधारणपदानामप्रयोगात्। सत्स्वपि तेष्वसति प्रमाणे तयोरसिद्धेरिति साध्यविकलः १ साधनविकलः २ उभयविकलः ३ सन्दिग्धसाध्यान्वयः ४ सन्दिग्धसाधनान्वयः ५ सन्दिग्धोभयान्वयः ६ विपरीतान्वयः ७ अप्रदर्शितान्वयः ८ चेत्यष्टौ साधर्म्यदृष्टान्ताभासाः। साध्याव्यावृत्तसाधनाव्यावृत्तोभयव्यावृत्ताः सन्दिग्धसाध्यव्यावृत्तिसन्दिग्धसाधनव्यावृत्तिसन्दिग्धोभयव्यावृत्तयो विपरीतव्यतिरेकोऽप्रदर्शितव्यतिरेकश्चेत्यष्टावेव वैधर्म्यदृष्टान्ताभासा भवन्ति। नन्वनन्वयाव्यतिरेकावपि कैश्चिद्दृष्टान्ताभासावुक्तौ। यथा रागादिमानयं वचनात्। अत्र साधर्म्यदृष्टान्ते आत्मनि रागवचनयोः सत्यपि साहित्ये वैध-

---

१ 'विपरीतान्वये' इति पाठः।

र्म्यदृष्टान्ते चोपलखण्डे सत्यामपि सह निवृत्तौ प्रतिबन्धाभावेनान्वयव्यतिरेकयोरभाव इत्यनन्वयाव्यतिरेकौ तौ कस्मादिह नोक्तौ । उच्यते । ताभ्यां पूर्वे न भिद्यन्त इति साधर्म्यवैधर्म्याभ्यां प्रत्येकमष्टावेव दृष्टान्ताभासा भवन्ति । यदाहुः, " **लिङ्गस्यानन्वया अष्टावष्टावव्यतिरेकिणः । नान्यथानुपपन्नत्वं कथंचित् ख्यापयन्त्यमी** ॥ १ ॥ " इति ॥ २७ ॥

अवसितं परार्थानुमानमिदानीं तन्नान्तरीयकं दूषणं लक्षयति—

## ॥ साधनदोषोद्भावनं दूषणम् ॥ २-१-२८ ॥

साधनस्य परार्थानुमानस्य येऽसिद्धविरुद्धादयो दोषाः पूर्वमुक्तास्तेषामुद्भासते प्रकाश्यतेऽनेनेत्युद्भावनं साधनदोषोद्भावकं वचनं दूषणम् । उत्तरत्राभूतग्रहणादिह भूता दोषोद्भावनाद्दूषणेति सिद्धम् ॥ २८ ॥

दूषणलक्षणे दूषणाभासलक्षणं सुज्ञानमेव भेदप्रतिपादनार्थं तु तल्लक्षणमाह—

## ॥ अभूतदोषोद्भावनानि दूषणाभासा जात्युत्तराणि ॥ २-१-२९ ॥

अविद्यमानानां साधनदोषाणां प्रतिपादनान्यदूषणान्यपि दूषणवदाभासमानानि दूषणाभासाः । तानि च जात्युत्तराणि । जातिशब्दः सादृश्यवचनः उत्तरसदृशानि जात्युत्तराणि उत्तरस्थानप्रयुक्तत्वात् । उत्तरसदृशानि जात्युत्तराणि जात्या सादृश्येनोत्तराणि जात्युत्तराणि । तानि च सम्यग्घेतौ हेत्वाभासे वा वादिना प्रयुक्ते झटिति तद्दोषतत्त्वाप्रतिभासे हेतुप्रतिबिम्बनप्रायाणि प्रत्यवस्थानान्यनन्तत्वात्परिसङ्ख्यातुं न शक्यन्ते । तथाप्यक्षपाददर्शितदिशा साधर्म्यादिप्रत्यवस्थानभेदेन साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्था—

१ गौतमसूत्र ५-१-१ ।

पत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमरूपतया चतुर्विंशतिः, उपदर्श्यन्ते । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिः । यथा नित्यः शब्दः कृतकत्वात् घटवदिति प्रयोगे कृते साधर्म्यप्रयोगेणैव प्रत्यवस्थानं नित्यः शब्दो निरवयवत्वादाकाशवत् । न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनराकाशसाधर्म्यान्निरवयवत्वान्नित्य इति १। वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिः । यथाऽनित्यः शब्दः कृतकत्वादित्यत्रैव प्रयोगे स एव हेतुर्वैधर्म्येण प्रयुज्यते । नित्यः शब्दो निरवयवत्वात् । अनित्यं हि सावयवं दृष्टं घटादीति । न चास्ति विशेषहेतुर्घटसाधर्म्यात्कृतकत्वादनित्यः शब्दो न पुनस्तद्वैधर्म्यान्निरवयवत्वान्नित्य इति २ उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती । तत्रैव प्रयोगे दृष्टान्तधर्मं कंचित् साध्यधर्मिण्यापादयन्नुत्कर्षसमा जातिं प्रयुङ्क्ते । यदि घटवत् कृतकत्वादनित्यः शब्दो घटवदेव मूर्तोऽपि भवतु न चेन्मूर्तो घटवदनित्योऽपि माभूदिति शब्दे धर्मान्तरोत्कर्षमापादयति ३ अपकर्षस्तु घटः कृतकः सन्नश्रावणो दृष्ट एवं शब्दोप्यस्तु नो चेद् घटवदनित्योपि माभूदिति शब्दे श्रावणत्वधर्ममपकर्षतीति ४ वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती । ख्यापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यः तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन्वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते। यथाविधः शब्दधर्मः कृतकत्वादिर्न तादृग्घटधर्मो यादृग्घटधर्मो न तादृक् शब्दधर्म इति ५-६ धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः । यथा कृतकं किंचिन्मृदु दृष्टं राङ्कवशय्यादि किंचित्कठिनं कुठारादि एवं कृतकं किंचिदनित्यं भविष्यति घटादि किंचि-

---

१ ' प्रतिहेतु ' इति पाठ ।

२ ' यादृक् च ' इति क्वचित्पाठ ।

नित्यं शब्दादीति ७ साध्यसाम्यापादनेन प्रत्यवस्थानं साध्यसमा जातिः। यथा यदि यथा घटस्तथा शब्दः प्राप्तं तर्हि यथा शब्दस्तथा घट इति घटोऽपि साध्यो भवतु। ततश्च न साध्यः साध्यस्य दृष्टान्तः स्यात्। न चेदेवं तथापि वैलक्षण्यात्सुतरामदृष्टान्त इति ८ प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती। यथा यदेतत् कृतकत्वं त्वया साधनमुपन्यस्तं तत्किं प्राप्य साधयत्यप्राप्य वा। प्राप्य चेत् द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न सदसतोरिति द्वयोश्च सत्त्वात् किं कस्य साध्यं साधनं वा ९ अप्राप्य तु साधनत्वमयुक्तमतिप्रसङ्गादिति १० अतिप्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः। यथा यद्यनित्यत्वे कृतकत्वं साधनं कृतकत्व इदानीं किं साधनं तत्साधनेऽपि किं साधनमिति ११ प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्ते जातिवाद्याह यथा घटः प्रयत्नानन्तरीयकोऽनित्यो दृष्ट एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टं कूपखननप्रयत्नानन्तरमुपलम्भादिति। न चेदमनैकान्तिकत्वोद्भावनं भङ्ग्यन्तरेण प्रत्यवस्थानात् १२ अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिः। यथानुत्पन्ने शब्दाख्ये धर्मिणि कृतकत्वं धर्मः क्व वर्तते तदेवं हेत्वभावादसिद्धिरनित्यत्वस्येति १३ साधर्म्यसमा वैधर्म्यसमा वा या जातिः पूर्वमुदाहृता सैव संशयेनोपसंह्रियमाणा संशयसमा जातिर्भवति। यथा किं घटसाधर्म्यात् कृतकत्वादनित्यः शब्द उत तद्वैधर्म्यादाकाशसाधर्म्याद्वा निरवयवत्वाद्वा नित्य इति १४ द्वितीयपक्षोत्थापनबुद्ध्या प्रयुज्यमाना सैव साधर्म्यसमा वैधर्म्यसमा वा जातिः प्रकरणसमा भवति तथैवानित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे नित्यः शब्दः श्रावणत्वाच्छ-

१ 'प्रतिदृष्टान्त' इत्यधिकं क्वचित्पुस्तके।

ब्दत्ववादिति उद्भावनप्रकारभेदमात्रे सति नानात्वं द्रष्टव्यम्, १५ त्रैकाल्यानुपपत्त्या हेतोः प्रत्यवस्थानमहेतुसमा जातिः। यथा हेतुः साधनं तत्साध्यात्पूर्वं पश्चात्सह वा भवेत्। यदि पूर्वमसति साध्ये तत्कस्य साधनम् अथ पश्चात्साधनम् पूर्वं तर्हि साध्यं तस्मिन् पूर्वं सिद्धे किं साधनेन अथ युगपत्साध्यसाधने तर्हि तयोः सव्येतरगोविषाणयोरिव साध्यसाधनभाव एव न भवेदिति १६ अर्थापत्त्या प्रत्यवस्थानमर्थापत्तिसमा जातिः। यद्यनित्यसाधर्म्यात्कृतकत्वादनित्यः शब्दोऽर्थादापद्यते नित्यसाधर्म्यान्नित्य इति अस्ति चास्य नित्येनाकाशादिना साधर्म्यं निरवयवत्वमित्युद्भावनं प्रकारभेद एवायमिति १७ अविशेषापादनेन प्रत्यवस्थानमविशेषसमा जातिः। यथा यदि शब्दघटयोरेको धर्मः कृतकत्वमिष्यते तर्हि समानधर्मयोगात्तयोरविशेषे तद्वदेव सर्वपदार्थानामविशेषः प्रसज्यत इति १८ उपपत्त्या प्रत्यवस्थानमुपपत्तिसमा जातिः। यथा यदि कृतकत्वोपपत्त्या शब्दस्यानित्यत्वं निरवयवत्वोपपत्त्या नित्यत्वमपि कस्मान्न भवति पक्षद्वयोपपत्त्याऽनध्यवसायपर्यवसानत्वं विवक्षितमित्युद्भावनप्रकारभेद एवायम् १९ उपलब्ध्या प्रत्यवस्थानमुपलब्धिसमा जातिः। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति प्रयुक्ते प्रत्यवतिष्ठते न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वे साधनम्। साधनं हि तदुच्यते येन विना न साध्यमुपलभ्यते। उपलभ्यते च प्रयत्नानन्तरीयकत्वेन विनापि विद्युदादावनित्यत्वं शब्देऽपि क्वचिद्वायुवेगभज्यमानवनस्पत्यादिजन्ये तथैवेति २० अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः। यथा तत्रैव प्रयत्नानन्तरीयकत्वहेतावुपन्यस्ते सत्याह जातिवादी न प्रयत्नकार्यः शब्दः प्रागुच्चारणादस्त्येव आवरणयोगात्तु नोपलभ्यते। आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द इति चेत्,

आवरणानुपलम्भेऽप्यनुपलम्भसद्भावात् आवरणानुपलम्भादभावः। तदभावे चावरणोपलब्धेर्भावो भवति। ततश्च मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणमिति प्रयत्नकार्यत्वाभावान्नित्यः शब्द इति २१ साध्यधर्मनित्यानित्यत्वविकल्पेन शब्दनित्यत्वापादनं नित्यसमा जाति। यथाऽनित्यः शब्द इति प्रतिज्ञाते जातिवादी विकल्पयति येयमनित्यता शब्दस्योच्यते सा किमनित्या नित्या वेति। यद्यनित्या तादियमवश्यमपायिनीत्यनित्यताया अपायान्नित्यः शब्दः। अथानित्यता नित्यैव तथापि धर्मस्य नित्यत्वात्तस्य च निराश्रयस्यानुपपत्तेस्तदाश्रयभूतः शब्दोऽपि नित्यो भवेत् तदनित्यत्वे तद्धर्मनित्यत्वायोगादित्युभयथापि नित्यः शब्द इति २२ सर्वभावानित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः। यथा घटेन साधर्म्यमनित्येन शब्दस्यास्तीति तस्यानित्यत्वं यदि प्रतिपाद्यते तद् घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिति तेषामप्यनित्यत्वं स्यात्। अथ पदार्थान्तराणां तथाभावेऽपि नित्यत्वं तर्हि शब्दस्यापि तन्माभूदिति अनित्यत्वमात्रापादनपूर्वकविशेषोद्भावनाद्विशेषसमातो भिन्नेयं जातिः २३ प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः। यथाऽनित्य शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिवाद्याह प्रयत्नस्य द्वैरूप्यं दृष्टं किंचिदसदेव तेन जन्यते यथा घटादि। किंचित्सदेवावरणव्युदासादिनाभिव्यज्यते यथा मृदन्तरितमूलकीलादि। एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन शब्दो व्यज्यते जन्यते वेति संशयति संशयापादनप्रकारभेदाच्च संशयसमातः कार्यसमा जातिर्भिद्यते २४ तदेवमुद्भावनविषयविकल्पभेदेन जातीनामानन्त्येऽप्यसङ्कीर्णोदाहरणविवक्षया चतुर्विंशतिर्जातिभेदा एते दर्शिताः। प्रतिसमाधानं तु सर्वजाती-

१ 'नावरणानुपलम्भसद्भावात् आवरणानुपलम्भेश्चानुपलम्भात्' इति क्वचित्पाठः।

नामन्यथानुपपत्तिलक्षणानुमानलक्षणहेतुपरीक्षणमेव। नह्यविप्लुतलक्षणे हेतावेवं प्रायाः पांशुपाताः प्रभवन्ति। कृतकत्वप्रयत्नानन्तरीयकत्वयोश्च दृढप्रतिबन्धत्वान्नावरणादिकृतं शब्दानुपलम्भनमपि त्वनित्यत्वकृतमेव। जातिप्रयोगे च परेण कृते सम्यगुत्तरमेव वक्तव्यं न प्रतीपं जात्युत्तरेरेव प्रत्यवस्थेयमासमञ्जस्यप्रसङ्गादिति॥ छलमपि च सम्यगुत्तरत्वाभावाज्जात्युत्तरमेव। उक्तं ह्येतदुद्भावनप्रकारभेदेनानन्तानि जात्युत्तराणीति। तत्र परस्य वदतोऽर्थविकल्पोपपादनेन वचनविघातश्छलम्। तत्त्रिधा वाक्छलं सामान्यछलमुपचारछलं चेति। तत्र साधारणशब्दे प्रयुक्ते वक्तुरभिप्रेतादर्थान्तरकल्पनया तन्निषेधो वाक्छलं यथा नवकम्बलोऽयं माणवक इति नूतनविवक्षया कथिते परः सङ्ख्यामारोप्य निषेधति कुतोऽस्य नव कम्बला इति। सम्भावनयातिप्रसङ्गिनोऽपि सामान्यस्योपन्यासे हेतुत्वारोपणेन तन्निषेधः सामान्यछलं यथाऽहो न खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति। सम्भवति ब्राह्मणे विद्याचरणसम्पदिति तच्छलवादी ब्राह्मणत्वस्य हेतुतामारोप्य निराकुर्वन्नभियुङ्क्ते यदि ब्राह्मणे विद्याचरणसम्पद् भवति। व्रात्येऽपि सा भवेद्व्रात्योऽपि ब्राह्मण एवेति। औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानमुपचारछलं यथा मञ्चाः क्रोशन्तीति उक्ते परः प्रत्यवतिष्ठते कथमचेतनाः मञ्चाः क्रोशन्ति मञ्चस्थास्तु पुरुषाः क्रोशन्तीति। तदत्र छलत्रयेऽपि वृद्धव्यवहारप्रसिद्धशब्दसामर्थ्यपरीक्षणमेव समाधानं वेदितव्यमिति ॥ २९ ॥

साधनदूषणाद्यभिधानं च प्रायो वादे भवतीति वादस्य लक्षणमाह—

---

१ नेत्रेषु धूलिप्रक्षेपा इत्यर्थ ।

## ॥ तत्त्वसंरक्षणार्थं प्राश्निकादिसमक्षं साधनदूषणवदनं वादः ॥ २-१-३० ॥

स्वपक्षसिद्धये वादिनः साधनं तत्प्रतिषेधाय प्रतिवादिनो दूषणम्। प्रतिवादिनोऽपि स्वपक्षसिद्धये साधनं तत्प्रतिषेधाय वादिनो दूषणम् । तदेवं वादिनः साधनदूषणे प्रतिवादिनोऽपि साधनदूषणे तयोर्वादिप्रतिवादिभ्यां वदनमभिधानं वादः । कथमित्याह प्राश्निकादिसमक्षं प्राश्निकाः सभ्याः "**स्वसमयपरसमयज्ञाः, कुलजाः पक्षद्वयेप्सिताः क्षमिणः । वादपथेष्वभियुक्तास्तुलासमाः प्राश्निकाः प्रोक्ताः**" इत्येवंलक्षणाः । आदिग्रहणेन सभापतिवादिप्रतिवादिपरिग्रहः । सेयं चतुरङ्गा कथा । एकस्याप्यङ्गस्य वैकल्ये कथात्वानुपपत्तेः । नहि वर्णाश्रमपालनक्षमं न्यायान्यायव्यवस्थापकं पक्षपातरहितत्वेन समदृष्टिं सभापतिं यथोक्तलक्षणांश्च प्राश्निकान् विना वादिप्रतिवादिनो स्वाभिमतसाधनदूषणसरणिमाराधयितुं क्षमौ । नापि दुःशिक्षितकुतर्कलेशवाचालबालिशजनविप्लावितो गतानुगतिको जनः सन्मार्गं प्रतिपद्येतेति । तस्य फलमाह तत्त्वसंरक्षणार्थं तत्त्वशब्देन तत्त्वनिश्चयः साधुजनहृदयविपरिवर्ती गृह्यते तस्य रक्षणं दुर्विदग्धजनजनितविकल्पकल्पनात् इति । ननु तत्त्वरक्षणं जल्पस्य वितण्डाया वा प्रयोजनं यदाह "**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखापरिवरणवत्**"[१] । इति न, वादस्यापि निग्रहस्थानवत्त्वेन तत्त्वसंरक्षणार्थत्वात् न चास्य निग्रहस्थानवत्त्वमसिद्धम् । "**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः**"[२] इति । वादल-

१ गौतमसूत्र १-२-१ ।
२ गौतमसूत्र ४-२-४८

क्षणे सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तस्य पञ्चावयवोपपन्न इत्यनेन न्यूनाधिकयोर्हेत्वाभासपञ्चकस्य चेत्यष्टानां निग्रहस्थानानामनुज्ञानात् तेषां च निग्रहस्थानान्तरोपलक्षणत्वात्। अत एव न जल्पवितण्डे कथे वादस्यैव तत्त्वसंरक्षणार्थत्वात्। ननु "**यथोक्तोपपन्नछलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रतिपक्षस्थापनाहीना वितण्डा**"[1] इति लक्षणे भेदाज्जल्पवितण्डे अपि कथे विधेते एव। न। प्रतिपक्षस्थापनाहीनाया वितण्डायाः कथात्वायोगात्। वैतण्डिको हि स्वपक्षमभ्युपगम्यास्थापयन् यत्किंचिद्वादेन परपक्षमेव दूषयन् कथमवधेयवचनः। जल्पस्तु यद्यपि द्वयोरपि वादिप्रतिवादिनोः साधनोपालम्भसम्भावनया कथात्वं लभते तथापि न वादादर्थान्तरम्। वादेनैव चरितार्थत्वात्। छलजातिनिग्रहस्थानभूयस्त्वयोगादचरितार्थ इति चेत्। न। छलजातिप्रयोगस्य दूषणाभासत्वेनाप्रयोज्यत्वात् निग्रहस्थानानां च वादेप्यविरुद्धत्वात्। न खलु खटचपेटामुखबन्धादयोऽनुचिता निग्रहा जल्पेऽप्युपयुज्यन्ते। उचितानां च निग्रहस्थानानां वादेऽपि न विरोधोऽस्ति। तन्न वादात् जल्पस्य कश्चिद् विशेषोऽस्ति। लाभपूजाख्यातिकामितादीनि तु प्रयोजनानि तत्त्वाध्यवसायसंरक्षणलक्षणप्रधानफलानुबन्धीनि पुरुषधर्मत्वाद्वादेऽपि न निवारयितुं पार्यन्ते। ननु छलजातिप्रयोगोऽसदुत्तरत्वाद्वादे न भवति। जल्पे तु तस्यानुज्ञानादस्ति वादजल्पयोर्विशेषः। यदाह "**दुःशिक्षितकुतर्कांशलेशवाचालिताननाः। शक्याः किमन्यथा जेतुं वितण्डाटोपपण्डिताः॥१॥ गतानुगतिको लोकः कुमार्गं तत्प्रतारितः। मा गादिति छलादीनि प्राह कारुणिको मुनिः**"॥२॥ इति, नैवम्।

१ गौतमसूत्र १-२-२

२ गौतमसूत्र १-२-३।

असदुत्तरैः परप्रतिक्षेपस्य कर्तुमयुक्तत्वात् । न ह्यन्यायेन जयं यशो धनं वा महात्मानः समीहन्ते । अथ प्रबलप्रतिवादिदर्शनात् तज्जये धर्मध्वंससम्भावनातः प्रतिभाक्षयेण सम्यगुत्तरस्याप्रतिभासादसदुत्तरैरपि पांशुभिरिवावकिरन्नेकान्तपराजयाद्वरं सन्देह इति धिया न दोषमावहतीति चेत् । न । अस्यापवादिकस्य जात्युत्तरप्रयोगस्य कथान्तरसमर्थनसामर्थ्याभावात् वाद एव । द्रव्यक्षेत्रकालभावानुसारेण यद्यसदुत्तरं कथंचन प्रयुञ्जीत किमेतावता कथान्तरं प्रसज्येत । तस्माज्जल्पवितण्डा निराकरणेन वाद एवैकः कथाप्रथां लभत इति स्थितम् ॥ ३० ॥

वादश्च जयपराजयावसानो भवतीति जयपराजययोर्लक्षणमाह—

## ॥ स्वपक्षस्य सिद्धिर्जयः ॥ २-१-३१ ॥

वादिनः प्रतिवादिनो वा या स्वपक्षस्य सिद्धिः सा जयः । सा च स्वपक्षसाधनदोषपरिहारेण परपक्षसाधनदोषोद्भावनेन च भवति। स्वपक्षे साधनमब्रुवन्नपि प्रतिवादी वादिसाधनस्य विरुद्धतामुद्भावयन् वादिनं जयति । विरुद्धतोद्भावनेनैव स्वपक्षे साधनस्योक्तत्वात् । यदाह " विरुद्धहेतुमुद्भाव्य वादिनं जयतीतरः" इति ॥३१॥

## ॥ असिद्धिः पराजयः ॥ २-१-३२ ॥

वादिनः प्रतिवादिनो वा या स्वपक्षस्यासिद्धिः सा पराजयः । सा च साधनाभासाभिधानात् सम्यक्साधनेऽपि वा परोक्तदूषणानुद्धरणाद्भवति ॥ ३२ ॥

ननु यद्यसिद्धिः पराजयः स तर्हि कीदृशो निग्रहो निग्रहान्ता हि कथा भवतीत्याह —

## ॥ स निग्रहो वादिप्रतिवादिनोः ॥२-१-३३ ॥

१ श्रीमदकलङ्क ( प्रयत्न् )

स पराजय एव वादिप्रतिवादिनोर्निग्रहो न वधबन्धादि। अथवा स एव स्वपक्षासिद्धिरूपपराजयो निग्रहहेतुत्वान्निग्रहो नान्यो यथाहुः परे "**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति**" ॥ ३३ ॥

तत्राह –

## ॥ न विप्रतिपत्त्यप्रतिपत्तिमात्रम् ॥ २–१–३४ ॥

विपरीता कुत्सिता विगर्हणीया प्रतिपत्तिर्विप्रतिपत्तिः। साधनाभासे साधनबुद्धिर्दूषणाभासे च दूषणबुद्धिः। अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः। स च साधने दूषणे दूषणं चोद्धरणं तयोरकरणमप्रतिपत्तिः। द्विधा हि वादी पराजीयते यथा कर्तव्यमप्रतिपद्यमानो विपरीतं वा प्रतिपद्यमान इति। विप्रतिपत्त्यप्रतिपत्ती एव विप्रतिपत्त्यप्रतिपत्तिमात्रं न पराजयहेतुः किं तु स्वपक्षस्यासिद्धिरेवेति विप्रतिपत्त्यप्रतिपत्त्योश्च निग्रहस्थानत्वनिरासात्तद्भेदानामपि निग्रहस्थानत्वं निरस्तम्। ते च द्वाविंशतिर्भवन्ति। तद्यथा १[1]प्रतिज्ञाहानिः २ प्रतिज्ञान्तरं ३ प्रतिज्ञाविरोधः ४ प्रतिज्ञासंन्यासो ५ हेत्वन्तरं ६ अर्थान्तरं ७ निरर्थकं ८ अविज्ञातार्थं ९ अपार्थकं १० अप्राप्तकालं ११ न्यूनं १२ अधिकं १३ पुनरुक्तं १४ अननुभाषणं १५ अज्ञानं १६ अप्रतिभा १७ विक्षेपः १८ मतानुज्ञा १९ पर्यनुयोज्योपेक्षणं २० निरनुयोज्यानुयोगः २१ अपसिद्धान्तो २२ हेत्वाभासश्चेति।

अत्राननुभाषणमज्ञानमप्रतिभा विक्षेपः पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिप्रकाराः। शेषा विप्रतिपत्तिभेदाः। तत्र प्रतिज्ञाहानेर्लक्षणं "[3]प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" इति

---

१ गौतमसूत्र १–२–१९।
२ गौतमसूत्र ५–२–१।
३ गौतमसूत्र ५–२–२।

सूत्रम् । अस्य भाष्यकारीयं व्याख्यानं “साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थितः प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। यथाऽनित्यः शब्दः ऐन्द्रियकत्वाद् घटवदित्युक्ते परः प्रत्यवतिष्ठते सामान्यमैन्द्रियकं नित्यं दृष्टं कस्मान्न तथा शब्दोऽपीत्येवं स्वप्रयुक्तस्य हेतोराभासतामवस्यन्नपि कथावसानमकृत्वा प्रतिज्ञात्यागं करोति यद्यैन्द्रिकं सामान्यं नित्यं कामं घटोऽपि नित्योऽस्त्विति । स खल्वयं साधनस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन् निगमनान्तमेव पक्षं जहाति । पक्षं च परित्यजन् प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात् पक्षस्येति”। तदेतदसङ्गतमेव । साक्षाद् दृष्टान्तहानिरूपत्वात् तस्यास्तत्रैव धर्मपरित्यागात् । परम्परया तु हेतूपनयनिगमनानामपि त्यागो, दृष्टान्तासाधुत्वे तेषामप्यसाधुत्वात् । तथा च प्रतिज्ञाहानेरेवेत्यसङ्गतमेव । वार्त्तिककारस्तु व्याचष्टे “दृष्टश्चासावन्ते स्थितत्वादन्तश्चेति दृष्टान्तः स्वपक्षः । प्रतिदृष्टान्तः प्रतिपक्षः । प्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानन् प्रतिज्ञां जहाति यदि सामान्यमैन्द्रि-

---

१ वात्स्यायन भाष्ये तु—“साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन्प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम्—ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृतेऽपर आह दृष्टमैन्द्रिकत्वं सामान्ये नित्ये कस्मान्न तथा शब्द इति प्रत्यवस्थिते, इदमाह यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो नित्योऽस्त्विति । स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति ॥ गौतमसूत्र ५-२-२ ॥

२ न्यायवार्तिके तु “दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन पक्ष एवाभिधीयते प्रतिदृष्टान्तशब्देन च प्रतिपक्षः प्रतिपक्षश्चासौ दृष्टान्तश्चेति । एतदुक्तं भवति । परपक्षस्य यो धर्मस्तं स्वपक्ष एवानुजानातीति यथाऽनित्यः शब्दः ऐन्द्रियकत्वादिति द्वितीयपक्षवादिना सामान्येन प्रत्यवस्थिते इदमाह यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवत्विति”। न्यायवार्तिक पृ.५५२ प.८

यर्कं नित्यं शब्दोऽप्येवमस्त्विति ” तदेतदपि व्याख्यानमसङ्गतम् । इत्थमेव प्रतिज्ञाहानेरवधारयितुमशक्यत्वात् न खलुप्रतिपक्षस्य धर्मं स्वपक्षेऽभ्यनुजानत एव प्रतिज्ञात्यागो येनायमेक एव प्रकारः प्रतिज्ञाहानौ स्यात् । अधिक्षेपादिभिराकुलीभावात् प्रकृत्या सभाभीरुत्वादन्यमनस्कत्वादेर्वा निमित्तत्वात् क्वचित् साध्यत्वेन प्रतिज्ञाय तद्विपरीतं प्रतिजानानस्याप्युपलम्भात् पुरुषभ्रान्तेरनेककारणत्वोपपत्तिरिति १ । प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतः प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति । अनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येन व्यभिचारे नोदिते । यदि ब्रूयाद्युक्तं सामान्यमैन्द्रियकं नित्यं तद्धि सर्वगतमसर्वगतस्तु शब्द इति सोऽयमनित्यः शब्द इति पूर्वं प्रतिज्ञातः प्रतिज्ञान्तरमसर्वगतः शब्द इति कुर्वन् प्रतिज्ञान्तरेण निगृहीतो भवति । एतदपि प्रतिज्ञाहानिवन्न युक्तम् । तस्याप्यनेकनिमित्ततोपपत्तेः प्रतिज्ञाहानितश्चास्य कथं भेदः पक्षत्यागस्योभयत्राविशेषात् । यथैव हि प्रतिदृष्टान्तधर्मस्य स्वदृष्टान्तेऽभ्यनुज्ञानात् पक्षत्यागस्तथा प्रतिज्ञान्तरादपि । यथा च स्वपक्षसिध्यर्थं प्रतिज्ञान्तरं विधीयते तथा शब्दानित्यत्वसिध्यर्थं भ्रान्तिवशात्तच्छब्दोऽपि नित्योऽस्त्वित्यनुज्ञानं यथा चाभ्रान्तस्येदं विरुध्यते तथा प्रतिज्ञान्तरमपि । निमित्तभेदाच्च तद्भेदेऽनिष्टनिग्रहस्थानान्तराणामप्युपुपङ्गः स्यात् । तेषां च तत्रान्तर्भावे प्रतिज्ञान्तरस्यापि प्रतिज्ञाहानावन्तर्भावः स्यादिति २ । प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तर-

१ “प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्”। गौतमसूत्र ५ २ ३।

२ ‘ नित्यत्वापत्ते ’ इति क्वचित्पाठः ।

३ गौतमसूत्र ५ २ ४ ।

स्यानुपलब्धिः । अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति सोऽयं प्रतिज्ञाहेत्वोर्विरोधो यदि गुणव्यतिरिक्तं द्रव्यं कथं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः । अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः कथं गुणव्यतिरिक्तं द्रव्यमिति तदयं प्रतिज्ञाविरुद्धाभिधानात् पराजीयते। तदेतदसङ्गतम् । यतो हेतुना प्रतिज्ञायाः प्रतिज्ञात्वे निरस्ते प्रकारान्तरतः प्रतिज्ञाहानिरेवेयमुक्ता स्यात् । हेतुदोषो वा विरुद्धालक्षणो न प्रतिज्ञादोष इति ३ । पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निह्नुवानस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानं भवति । यथाऽनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भावितायां यदि ब्रूयात्क एवमाहानित्यः शब्द इति प्रतिज्ञासंन्यासात् पराजितो भवतीति । एतदपि प्रतिज्ञाहानितो न भिद्यते हेतोरनैकान्तिकत्वोपलम्भेनात्रापि प्रतिज्ञायाः परित्यागाविशेषात् ४ । अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरं नाम निग्रहस्थानं भवति । तस्मिन्नेव प्रयोगे तथैव सामान्यस्य व्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादिविशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति । इदमप्यतिप्रसक्तं यतोऽविशेषोक्ते दृष्टान्ते उपनये निगमने वा प्रतिषिद्धे विशेषमिच्छतो दृष्टान्ताद्यन्तरमपि निग्रहस्थानान्तरमनुषज्येत तत्रत्राप्याक्षेपसमाधानानां समानत्वादिति ५ ।प्रकृतार्थादर्थान्तरं तदनौपयिकमभिदधतोऽर्थान्तरं नाम निग्रहस्थानं भवति । यथाऽनित्यः शब्दः कृतकत्वादिति हेतुः। हेतुरिति हिनोतेर्धातोस्तुप्रत्यये कृदन्तं पदम् पदं च नामाख्यातनिपातोपसर्गा इति प्रत्ययनामादीनि व्याचक्षाणोऽर्थान्तरेण निगृह्यते ।

१ 'पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ।' इति गौतमसूत्र ५-२-५।

२ 'अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्'। गौतमसूत्र ५-२-६ ।

३ 'प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्' । गौतमसूत्र ५-२-७ ।

एतदप्यर्थान्तरं निग्रहस्थानं समर्थे साधने दूषणे वा प्रोक्ते निग्रहाय कल्पेतासमर्थे वा । न तावत्समर्थे स्वसाध्यं प्रसाध्य नृत्यतोऽपि दोषाभावाल्लोकवत् । असमर्थेऽपि प्रतिवादिनः पक्षासिद्धौ तन्निग्रहाय स्यादसिद्धो वा । प्रथमपक्षे तत्पक्षासिद्धिरेवास्य निग्रहो न त्वतो निग्रहस्थानात् । द्वितीयपक्षेऽप्यतो न निग्रहः पक्षासिद्धेरुभयोरप्यभावादिति ६ । [1]अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकं नाम निग्रहस्थानं भवति । यथा नित्यः शब्दः कचटतपानां गजडदबत्वाद् घझढधभवदित्येतदपि सर्वथार्थशून्यत्वान्निग्रहाय कल्पेत साध्यानुपयोगाद्वा । तत्राद्यविकल्पोऽयुक्तः । सर्वथार्थशून्यशब्दस्यैवासम्भवात् । वर्णक्रमनिर्देशस्याप्यनुकार्येणार्थेनार्थवत्त्वोपपत्तेः । द्वितीयविकल्पे तु सर्वमेव निग्रहस्थानं निरर्थकं स्यात् । साध्यसिद्धावनुपयोगित्वाविशेषात् । किंचिद्विशेषमात्रेण भेदेन[2] त्वात्कृतहस्तास्फालनकक्षापिट्टनादेरपि साध्यानुपयोगिनो निग्रहस्थानान्तरत्वानुषङ्ग इति ७ । [3]यत्साधनवाक्यं दूषणवाक्यं वा त्रिरभिहितमपि परिषत्प्रतिवादिभ्यां बोद्धुं न शक्यते तदविज्ञातार्थं नाम निग्रहस्थानं भवति । अत्रेदमुच्यते । वादिना त्रिरभिहितमपि वाक्यं परिषत्प्रतिवादिभ्यां मन्दमतित्वादविज्ञातं गूढाभिधानतो वा द्रुतोच्चाराद्वा । प्रथमपक्षे सत्साधनवादिनोऽप्येतन्निग्रहस्थानं स्यात् । तत्राप्यनयोर्मन्दमतित्वेनाविज्ञातत्वसम्भवात् । द्वितीयपक्षे तु यत्र वाक्यप्रयोगेऽपि तत्प्रसङ्गो गूढाभिधानतया परिषत्प्रतिवादिनोर्महाप्राज्ञयोरप्यविज्ञातत्वोपलम्भात् । अथाभ्यामविज्ञातमप्येतद्वादी व्याचष्टे गूढोपन्यासमप्यात्मनः स एव व्याचष्टामव्याख्याने तु जयाभाव एवास्य । न

१ "वर्णक्रमनिर्देशवन्निरर्थकम्"। गौतमसूत्र ५-२-८ ।

२ 'भेदे वा पदकृत' इति क्वचित्पाठ ।

३ "परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्"। गौतमसूत्र ५ २ ९।

पुनर्निग्रहः । परस्य पक्षसिद्धेरभावात् । द्रुतोच्चारेऽप्यनयोः कथंचित् ज्ञानं सम्भवत्येव । सिद्धान्तवेदित्वात् । साध्यानुपयोगिनि तु वादिनः प्रलापमात्रे तयोरविज्ञानं नाविज्ञातार्थं वर्णक्रमनिर्देशवत् । ततो नेदमविज्ञातार्थं निरर्थकाद्भिद्यत इति ८ । पूर्वापरासङ्गतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानं भवति यथा दश दाडिमानि षडपूपा इत्यादि, एतदपि निरर्थकान्न भिद्यते । यथैव हि गजडदबादौ वर्णानां नैरर्थक्यं तथात्र पदानामिति । यदि पुनः पदनैरर्थक्यं वर्णनैरर्थक्यादन्यत्वान्निग्रहस्थानान्तरं तर्हि वाक्यनैरर्थक्यस्याप्याभ्यामन्यत्वान्निग्रहस्थानान्तरत्वं स्यात् । पदवत्पौर्वापर्येणाप्रयुज्यमानानां वाक्यानामप्यनेकधोपलम्भात् "शङ्खः कदल्यां कदली च भेर्यां तस्यां च भेर्यां सुमहद्विमानम् । तच्छङ्खभेरीकदलीविमानमुन्मत्तगंगप्रतिमं बभूव ॥" इत्यादिवत् । यदि पुनः पदनैरर्थक्यमेव वाक्यनैरर्थक्यं पदसमुदायात्मकत्वात् तस्य । तर्हि वर्णनैरर्थक्यमेव पदनैरर्थक्यं स्याद्वर्णसमुदायात्मकत्वात् तस्य । वर्णानां सर्वत्र निरर्थकत्वात् पदस्यापि तत्प्रसक्तेस्तर्हि पदस्यापि निरर्थकत्वात् तत्समुदायात्मनो वाक्यस्यापि नैरर्थक्यानुषङ्गः । पदस्यार्थवत्त्वेन पदार्थापेक्षया तस्यापि तदस्तु प्रकृतिप्रत्ययादिवत् न खलु प्रकृतिः केवला पदं प्रत्ययो वा । नाप्यनयोरनर्थकत्वम् अभिव्यक्तार्थाभावादनर्थकत्वे पदस्यापि तत्स्यात् ॥ यथैव हि प्रकृत्यर्थः प्रत्ययेनाभिव्यज्यते प्रत्ययार्थश्च प्रकृत्या । तयोः केवलयोरप्रयोगात्तथा देवदत्तास्तिष्ठतीत्यादिप्रयोगे स्याद्यन्त-

१ 'पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्' । गौतमसूत्र ५-२-१० ।

२ पातञ्जलमहाभाष्ये १-१-१ ।

३ 'वर्णस्यापि' इति क्वचित्पाठः ।

४ नामपदस्य ।

पदार्थस्य त्याद्यन्तपदार्थस्य च। स्वाद्यन्तपदेनाभिव्यक्तेः केवलस्याप्रयोगः पदान्तरापेक्षस्य पदस्य सार्थकत्वं प्रकृत्यपेक्षस्य प्रत्ययस्य तदपेक्षस्य च प्रकृत्यादिवर्णस्य सार्थकत्वमिति ९। प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्यावयवविपर्यासेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालं नाम निग्रहस्थानं भवति स्वप्रतिपत्तिवत् परप्रतिपत्तेर्जनने परार्थानुमाने क्रमस्याप्यङ्गत्वात् एतदप्यपेशलम्। प्रेक्षावतां प्रतिपत्तॄणामवयवक्रमनियमं विनाप्यर्थप्रतिपत्त्युपलम्भात्। ननु यथापि शब्दाच्छ्रुताच्छब्दस्मरणं ततोऽर्थप्रत्यय इति शब्दादेवार्थप्रत्ययः परम्परया तथा प्रतिज्ञाद्यवयवव्युत्क्रमात् तत्क्रमस्मरणं ततो वाक्यार्थप्रत्ययो न पुनस्तद्व्युत्क्रमात्। इत्यप्यसारम्। एवंविधप्रतीत्यभावात् यस्माद्धि शब्दादुच्चरितात्तत्रार्थे प्रतीतिः स एव तस्य वाचको नान्योऽन्यथा शब्दात्तत्र माप्यापशब्दे तद्व्यतिक्रमे च स्मरणं ततोऽर्थप्रतीतिरित्यपि वक्तुं शक्येत। एवं शब्दान्वाख्यानवैयर्थ्यमिति चेत्। नैवम्। वादिनोऽनिष्टमात्रापादनात्। अपशब्देऽपि चान्वाख्यानस्योपलम्भात्। संस्कृताच्छब्दात्सत्यात् धर्मोऽन्यस्मादधर्म इति नियमे चान्यधर्माधर्मोपायानुष्ठानवैयर्थ्यं धर्माधर्मयोश्चाप्रतिनियमप्रसङ्गोऽधार्मिके धार्मिके च तच्छब्दोपलम्भात् भवतु वा तत्क्रमादर्थप्रतीतिस्तथाप्यर्थप्रत्ययः क्रमेण स्थितो येन वाक्येन व्युत्क्रम्यते तन्निरर्थकं न त्वप्राप्तकालमिति १०। पञ्चावयवे वाक्ये प्रयोक्तव्ये तदन्यतमेनाप्यवयवेन हीनं न्यूनं नाम निग्रहस्थानं भवति साधनाभावे साध्यसिद्धेरभावात् प्रतिज्ञादीनां च पञ्चानामपि साधनत्वादित्यप्यसमीचीनम्। पञ्चावयवप्रयोगमन्तरेणापि साध्यसिद्धेरभिधानात्। प्रतिज्ञा हेतुप्रयोगमन्तरेणेव तत्सिद्धे-

१ क्रियापदस्य।

२ "अवयवविपर्यासवचनमप्राप्तकालम्। गौतमसूत्र ५-२-११।

३ "हीनमन्यतमेनाप्यवयवेन न्यूनम्"। गौतमसूत्र ५ २ १२।

रभावात् अतस्तद्धीनमेव न्यूनं निग्रहस्थानमिति ११ । ऐकेनैव हेतुनोदाहरणेन वाऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतोऽधिकं नाम निग्रहस्थानं भवति निष्प्रयोजनाभिधानात् । एतदप्ययुक्तम् । तथाविधाद्वाक्यात् पक्षसिद्धौ पराजयायोगात् । कथं चैवं प्रमाणसंप्लवोऽभ्युपगम्येताभ्युपगमे वाधिकान्निग्रहाय जायेत । प्रतिपत्तिदार्ढ्यसंवादसिद्धिप्रयोजनसद्भावान्न निग्रह इत्यन्यत्रापि समानम् । हेतुनोदाहरणेन चैकेन प्रसाधितेऽप्यर्थे द्वितीयस्य हेतोरुदाहरणस्य वा नानर्थक्यम् । तत्प्रयोजनसद्भावात् । न चैवमनवस्था कस्यचित् क्वचिन्निराकाङ्क्षतोपपत्तेः प्रमाणान्तरवत् । कथं चास्य कृतकत्वादौ स्वार्थिकप्रत्ययस्य वचनं यत्कृतकं तदनित्यमिति व्याप्तौ यत्तद्वचनवृत्तिपदप्रयोगादेव चार्थप्रतिपत्तौ वाक्यप्रयोगोऽधिकत्वान्निग्रहस्थानं न स्यात् । तथाविधस्याप्यस्य प्रतिपत्तिविशेषोपायत्वान्नेति चेत् । कथमनेकस्य हेतोरुदाहरणस्य वा तदुपायभूतस्य वचनं निग्रहाधिकरणम् । निरर्थकस्य तु वचनं निरर्थकत्वादेव निग्रहस्थानं नाधिकत्वादिति १२ । शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवत्यन्यत्रानुवादात् । शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते । यथाऽनित्यः शब्दोऽनित्यः शब्द इति । अर्थपुनरुक्तं यत्र सोऽर्थः प्रथममन्येन शब्देनोक्तः पुनः पर्यायान्तरेणोच्यते । यथा नित्यः शब्दोऽविनाशी ध्वनिरिति । अनुवादे तु पौनरुक्तमदोषो यथा " हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् " इति । अत्रार्थपुनरुक्तमेवानुपपन्नं न शब्दपुनरक्तमर्थभेदेन शब्दसाम्येऽप्यस्य सम्भवात् । यथा " हसति हसति स्वामि-

१ " हेतूदाहरणाधिकमधिकम् " । गौतमसूत्र ५ २ १३ ।

२ ' प्रतिपादितार्थे ' इति क्वचित्पाठ ।

३ " शब्दार्थयो पुनर्वचन पुनरुक्तमन्यत्रानुवादात् " । गौतमसूत्र ५ २ १४ ।

४ गौतमसूत्र १ १ ३९ ।

न्युच्चै रुदत्यतिरोदिति कृतपरिकरं स्वेदोद्गारि प्रधावति धावति । गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति, धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति "॥ १ ॥ इत्यादि । ततः स्पष्टार्थैरावर्तकैस्तैरेवान्यैर्वा शब्दैः सभ्याः प्रतिपादनीयाः । तदप्रतिपादकशब्दानां तु सकृत् पुनः पुनर्वाभिधानं निरर्थकं न तु पुनरुक्तमिति । यदप्यर्थापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमुक्तं । यथाऽसत्सु मेघेषु वृष्टिर्न भवतीत्युक्तेऽर्थापद्यते सत्सु भवतीति तत्कण्ठेन कथ्यमानं पुनरुक्तं भवति । अर्थगत्यर्थे हि शब्दप्रयोगे प्रतीतेऽर्थे किं तेनेति । एतदपि प्रतिपन्नार्थप्रतिपादकत्वेन वैयर्थ्या-न्निग्रहस्थानं नान्यथा । तथा चेदं निरर्थकान्न विशिष्येतेति १३ । पर्षदा विदितस्य वादिना त्रिरभिहितस्यापि यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं भवति अप्रत्युच्चारयत् किमाश्रयं दूषणमभिदधतीत्यत्रापि किं सर्वस्य वादिनोक्तस्याननुभाषणमुत प्रयत्नानान्तरीयिका साध्यसिद्धिस्तस्येति । तत्राद्यः पक्षोऽयुक्तः परोक्तमशेषमप्रत्युच्चारयतोऽपि दूषणवचनाव्याघातात् । यथा सर्वमनित्यं सत्त्वादित्युक्ते सत्त्वादित्ययं हेतुर्विरुद्ध इति हेतुमेवोच्चार्य । विरुद्धतोद्भाव्यते क्षणक्षयाद्येकान्ते सर्वथार्थक्रियाविरोधात्सत्त्वानुपपत्तेरिति समर्थ्यते च । तावता-परोक्तहेतोर्दूषणात्किमन्योच्चारणेन । अतो यन्नान्तरीयिका साध्यसिद्धिस्तस्यैवाप्रत्युच्चारणमननुभाषणं प्रतिपत्तव्यम् । अथैवं दूषयितुमसमर्थः शास्त्रार्थपरिज्ञानविशेषविकलत्वात्तदायमुत्तराप्रतिपत्तेरेव तिरस्क्रियते न पुनरननुभाषणादिति १४ । पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति ।

---

१ " विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्यु (च्चा) रणमननुभाषणम् " । गौतमसूत्र ५–२–१६ ।

२ " अविज्ञातं चाज्ञानम् " । गौतमसूत्र ५–२–१७ ।

आविदितोत्तरविपयो हि कोत्तरं ब्रूयात्। न चाननुभाषणमेवेदं ज्ञातेऽपि वस्तुन्यननुभाषणासामर्थ्यदर्शनात्। एतदप्यसाम्प्रतम्। प्रतिज्ञाहान्यादिनिग्रहस्थानानां भेदभावानुपङ्गात्। तत्राप्यज्ञानस्यैव सम्भवात् तेषां तत्प्रभेदत्वे वा निग्रहस्थानप्रतिनियमाभावप्रसङ्गः परोक्तस्यार्थाज्ञानादिभेदेन निग्रहस्थानानेकत्वप्रसङ्गात् १५। परपक्षे[1] गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा नाम निग्रहस्थानं भवति एषाप्यज्ञानान्न भिद्यते १६। "कार्यव्यासङ्गात्[2] कथाविच्छेदो विक्षेपो" नाम निग्रहस्थानं भवति सिषाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्तीदं मे करणीयं परिहीयते पीनसेन[3] कण्ठ उपरुद्ध इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते। एतदप्यज्ञानतो नार्थान्तरमिति[4] १७। स्वपक्षे[5] परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापादयतो मतानुज्ञा नाम निग्रहस्थानं भवति। चौरो भवान् पुरुषत्वात्प्रसिद्धचौरवदित्युक्ते भवानपि चोरः पुरुषत्वादिति ब्रुवन्नात्मनः परापादितं चौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते। इदमप्यज्ञानान्न भिद्यते। अनैकान्तिकता चात्र हेतोः स ह्यात्मीयहेतोरात्मीयेनैवानैकान्तिकतां दृष्ट्वा प्राह भवत्पक्षेऽप्ययं दोषः समानस्त्वमपि पुरुषो भवसीत्यनैकान्तिकत्वमेवोद्भावयतीति १८। निग्रहप्राप्तस्यानिग्रहः[6] पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं भवति। पर्यनुयोज्यो नाम

---

१ "उत्तरस्याप्रतिपत्तिरप्रतिभा"। गौतमसूत्र ५-२-१८।

२ गौतमसूत्र ५-२-१९।

३ पीनसो रोगविशेषः।

४ 'न भिद्यते' इति क्वचित्पाठः।

५ "स्वपक्षदोषाभ्युपगमात्परप ("पदो") क्षे दोषप्रसङ्गो मतानुज्ञा"। गौतमसूत्र ५-२-२०।

६ "निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्"। गौतमसूत्र ५-२-२१।

निग्रहोपपत्त्यावश्यं नोदनीय इदं ते निग्रहस्थानमुपनतमतो निगृहीतोऽसीत्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणे निगृह्यते। एतच्च कस्य निग्रह इति अनुयुक्तया परिषदोद्भावनीयं न त्वसावात्मनो दोषं विवृणुयादहं निग्राह्यस्त्वयोपेक्षित इति। एतदप्यज्ञानान्न भिद्यते १९। "अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगो" नाम निग्रहस्थानं भवति। उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात्स एवाभूतदोषोद्भावनान्निगृह्यते। एतदपि नाज्ञानाद्यतिरिच्यते २०। "सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तो" नाम निग्रहस्थानं भवति। यः प्रथमं कञ्चित् सिद्धान्तमभ्युपगम्य कथामुपक्रमते। तत्र च सिषाधयिषितार्थसाधनाय परोपालम्भाय वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन निगृह्यते। एतदपि प्रतिवादिनः प्रतिपक्षसाधने सत्येव निग्रहस्थानं नान्यथेति २१। "हेत्वाभासाश्च यथोक्ताः" असिद्धविरुद्धादयो निग्रहस्थानम्। अत्रापि विरुद्धहेतूद्भावनेन प्रतिपक्षसिद्धेर्निग्रहाधिकरणत्वं युक्तमसिद्धाद्युद्भावने तु प्रतिवादिना प्रतिपक्षसाधने कृते तद्युक्तं नान्यथेति २२॥ तदेवमक्षपादोपदिष्टं पराजयाधिकरणं परीक्ष्य सौगतागमितं तत्परीक्ष्यते॥ नाप्यसाधनाङ्गवचनादोषोद्भावने स्वपक्षस्यासिद्धिरेव पराजयो नासाधनाङ्गवचनमदोषोद्भावनं च। यथाह धर्मकीर्तिः, "असाधनाङ्गवचनमदोषोद्भावनं द्वयोः निग्रहस्थानमन्यत्तु न युक्त-

---

१ गौतमसूत्र ५-२-२२।

२ "नाभियो" इति पाठ। गौतमसूत्र ५-२-२२।

३ गौतमसूत्र ५-२-२३।

४ गौतमसूत्र ५-२-२४।

मिति नेष्यते " अत्र हि स्वपक्षं साधयन् वादिप्रतिवादिनोरन्यतरोऽसाधनाङ्गवचनाददोषोद्भावनाद्वा परं निगृह्णाति । प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य पराजयादन्योद्भावनं व्यर्थम् । द्वितीयपक्षे साधनाङ्गवचनाद्युद्भावनेपि न कस्यचिज्जयः । पक्षसिद्धेरुभयोरभावात् । यच्चास्य व्याख्यानं साधनं सिद्धिस्तदङ्गं त्रिरूपं लिङ्गं तस्यावचनं तूष्णीम्भावो यत्किंचिद्भाषणं वा साधनस्य वा त्रिरूपलिङ्गस्याङ्गं समर्थनम् । विपक्षे बाधकप्रमाणोपदर्शनरूपं तस्यावचनं वादिनो निग्रहस्थानमिति तत्पञ्चावयवप्रयोगवादिनोऽपि समानम् । शक्यं हि तेनाप्येवं वक्तुं सिध्यङ्गस्य पञ्चावयवप्रयोगस्यावचनात् सौगतस्य वादिनो निग्रहः । ननु चास्य तदवचनेऽपि निग्रहः प्रतिज्ञानिगमनयोः पक्षधर्मोपक्षधर्मोपसंहारसामर्थ्येन गम्यमानत्वाद्गम्यमानयोश्च वचने पुनरुक्तत्वानुषङ्गात् । तत्प्रयोगेऽपि हेतुप्रयोगमन्तरेण साध्यार्थाप्रसिद्धेरित्यप्यसत् । पक्षधर्मोपसंहारस्याप्येवं वचनानुषङ्गात् । अथ सामर्थ्याद्गम्यमानस्यापि यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च शब्द इति पक्षधर्मोपसंहारस्य वचनहेतोरपक्षधर्मत्वे त्वसिद्धत्वव्यवच्छेदार्थम्, तर्हि साध्याधारसन्देहापनोदार्थं गम्यमानाया अपि प्रतिज्ञायाः प्रतिज्ञाहेतूदाहरणोपनयानामेकार्थप्रतिप्रदर्शनार्थं निगमनस्य वचनं किं न स्यात् । नहि प्रतिज्ञादीनामेकार्थत्वोपदर्शनमन्तरेण सङ्गतत्वं घटते भिन्नविषयप्रतिज्ञादिवत् । ननु प्रतिज्ञातः साध्यसिद्धौ हेत्वादिवचनमनर्थकमेव स्यात् अन्यथा नास्याः साधनाङ्गतेति चेत् । तर्हि भवतोऽपि हेतुतः साध्यसिद्धौ दृष्टान्तोऽनर्थकः स्यात् । अन्यथा नास्य साधनाङ्गतेति समानम् । ननु साध्यसाधनयोर्व्याप्तिप्रदर्शनार्थत्वात् नानर्थको दृष्टान्तस्तत्र । तदप्रदर्शने हेतोरगमकत्वादित्यप्ययुक्तम् ।

१ ' एकार्थत्व ' इति क्वचित्पाठः ।

मर्यानित्यत्वसाधने सत्त्वादेर्दृष्टान्तासम्भवतोऽगमकत्वानुषङ्गात्। विपक्षव्यावृत्त्या सत्त्वादेर्गमकत्वे वा सर्वत्रापि हेतोस्तथैव गमकत्वप्रसङ्गात् दृष्टान्तोऽनर्थक एव स्यात्। विपक्षव्यावृत्त्या च हेतुं समर्थयन् कथं प्रतिज्ञां प्रतिक्षिपेत्। तस्याश्चानभिधाने क्व हेतुः साध्यं वा वर्तेत। गम्यमाने प्रतिज्ञाविषय एवेति चेत्। तर्हि गम्यमानस्यैव हेतोरपि समर्थनं स्यान्न तूक्तस्य। अथ गम्यमानस्यापि हेतोर्मन्दमतिप्रतिपत्त्यर्थं वचनम्। तथा प्रतिज्ञावचने कोऽपरितोषः। यच्चेदमसाधनाङ्गमित्यस्य व्याख्यानान्तरं साधर्म्येण वचने वैधर्म्यवचनं वैधर्म्येण च प्रयोगे साधर्म्यवचनं गम्यमानत्वात् पुनरुक्तमतो न साधनाङ्गमित्यप्यसाम्प्रतम्। यतः सम्यक्साधनसामर्थ्येन स्वपक्षं साधयतो वादिनो निग्रहः स्यादसाधयतो वा प्रथमपक्षेण साध्यसिद्धप्रतिबन्धिवचनाधिक्योपालम्भमात्रेणास्य निग्रहोऽविरोधात्। नन्वेवं नाटकादिघोषणतोऽप्यस्य निग्रहो न स्यात्। सत्यमेतत्। स्वसाध्यं प्रसाध्य नृत्यतोऽपि दोषाभावाल्लोकवत्। अन्यथा ताम्बूलभक्षणभ्रूक्षेपखाट्कृतहस्तास्फालनादिभ्योऽपि सत्यसाधनवादिनोऽपि निग्रहः स्यात्। अथ स्वपक्षं प्रसाधयतोऽस्य ततो निग्रहः। नन्वत्रापि किं प्रतिवादिना स्वपक्षे साधिते वादिनो वचनाधिक्योपालम्भो निग्रहो लक्ष्येतासाधिते वा। प्रथमपक्षे स्वपक्षसिद्ध्यैवास्य निग्रहाद्वचनाधिक्योद्भावनमनर्थकम्। तस्मिन्सत्यपि पक्षसिद्धिमन्तरेण जयायोगात्। द्वितीयपक्षे तु युगपद्वादिप्रतिवादिनोः पराजयप्रसङ्गो वा स्यात्। स्वपक्षसिद्धेरभावाविशेषात्। ननु न स्वपक्षसिध्द्यसिध्दिनिबन्धनौ जयपराजयौ। तयोर्ज्ञानाज्ञाननिबन्धनत्वात्। साधनवादिना हि साधुसाधनं ज्ञात्वा वक्तव्यं दूषणवादिना च दूषणं तत्र साधर्म्यवचनाद्वाऽर्थस्य प्रतिपत्तौ तदुभयवचने वादिनः प्रतिवादिना सभायामसाधनाङ्गवचन-

१ वैधर्म्यवचनात्' इत्यधिकं क्वचित्।

स्योद्भावनात्साधुसाधनाज्ञानसिद्धेः पराजयः । प्रतिवादिनस्तु तद्दूषणज्ञाननिर्णयाज्जयः स्यात् । इत्यप्यविचारितरमणीयम् । यतः स प्रतिवादी सत्साधनवादिनः साधनाभासवादिनो वा वचनाधिक्यदोषमुद्भावयेत् । तत्राद्यपक्षे वादिनः कथं साधुसाधनाज्ञानं तद्वचनेयत्ताज्ञानस्यैवाभावात् । द्वितीयपक्षे तु न प्रतिवादिनो दूषणज्ञानमवतिष्ठते साधनाभासस्यानुद्भावनात्तद्वचनाधिक्यदोषस्य ज्ञानात् । दूषणज्ञोऽसाविति चेत् । साधनाभासाज्ञानाददूषणज्ञोऽपीति नैकान्ततो जयेत् । तददोषोद्भावनलक्षणस्य पराजयस्यापि निवारयितुमशक्तेः । अथ वचनाधिक्यदोषो, दोषोद्भावनादेव प्रतिवादिनो जयसिद्धौ साधनाभासोद्भावनमनर्थकम् । नन्वेवं साधनाभासानुद्भावनात्तस्य पराजयसिद्धौ वचनाधिक्योद्भावनं कथं जयाय प्रकल्पेत । अथ वचनाधिक्यं साधनाभासं चोद्भावयतः प्रतिवादिनो जयति कथमेवं साधर्म्यवचने वैधर्म्यवचनं वैधर्म्यवचने वा साधर्म्यवचनं पराजयाय प्रभवेत् । कथं चैवं वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं न स्यात् । क्वचिदेकत्रापि पक्षे साधनसामर्थ्यज्ञानाज्ञानयोः सम्भवात् । न खलु शब्दादौ नित्यत्वस्यानित्यत्वस्य वा परीक्षायामेकस्य साधनसामर्थ्ये ज्ञानमन्यस्य चाज्ञानं जयस्य पराजयस्य वा निबन्धनं न भवति । युगपत्साधनासामर्थ्यज्ञाने च वादिप्रतिवादिनोः कस्य जयः पराजयो वा स्यादविशेषात् । न कस्यचिदिति चेत् तर्हि साधनवादिनो वचनाधिक्यकारिणः साधनसामर्थ्याज्ञानसिद्धेः प्रतिवादिनश्च वचनाधिक्यदोषोद्भावनाच्चदोषमात्रज्ञानसिद्धेर्न कस्यचिज्जयः पराजयो वा स्यात् । नहि यो यद्दोषं वेत्ति स तद्गुणमपि कुतश्चिन्मारणशक्तो वेदनेऽपि विषद्रव्यस्य कुष्ठापनयनशक्तो संवेदनानुदयात् तन्न तत्सामर्थ्यज्ञानाज्ञाननिबन्धनौ जयपराजयौ व्यवस्थापयितुं शक्यौ । यथोक्तदोषानुषङ्गात् । स्वपक्षसि-

द्वयसिद्धिनिबन्धनौ तु तौ ।निरवद्यौ पक्षप्रतिपक्षपरिग्रहवैयर्थ्याभावात् । कस्यचित् कुतश्चित् स्वपक्षसिद्धौ निश्चितायां परस्य तत्सिद्ध्यभावतः सकृज्जयपराजयप्रसङ्गात् । यच्चेदमदोषोद्भावनमित्यस्य व्याख्यानं प्रसज्यप्रतिषेधे दोषोद्भावनाभावमात्रमदोषोद्भावनम् । पर्युदासे तु दोषाभासानामन्यदोषाणां चोद्भावनं प्रतिवादिनो निग्रहस्थानमिति तद्वादिना दोषवति साधने प्रयुक्ते सत्यनुमतमेव । यदि वादी स्वपक्षं साधयेन्नान्यथा । वचनाधिक्यं तु दोषः प्रागेव प्रतिविहितो यथैव हि पञ्चावयवप्रयोगे वचनाधिक्यं यथा निग्रहस्थानं तथा त्र्यवयवप्रयोगे न्यूनतापि स्याद्विशेषाभावात् । प्रतिज्ञादीनि हि पञ्चाप्यनुमानं "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः"[1] इत्यभिधानात् तेषां मध्येऽन्यतमस्याप्यभिधाने न्यूनताख्यो दोषोऽनुषज्यत एव । हीनमन्यतमेनापि[2] न्यूनमिति वचनात् ततो जयेतरव्यवस्थायां नान्यन्निमित्तमुक्तान्निमित्तादित्यलं प्रसङ्गेन । अयं च प्रागुक्तश्चतुरङ्गो वेदः कदाचित्पत्रालम्बनमप्यपेक्षतेऽतस्तल्लक्षणमत्रावश्याभिधातव्यं यतो नाविज्ञातस्वरूपस्यावलम्बनं जयाय प्रभवति न चाविज्ञातस्वरूपं परपत्रं भेत्तुं शक्यमित्याहुः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च द्वितीयस्याध्यायस्य प्रथममाह्निकं समाप्तम्[3] ॥

१ गौतमसूत्र १-१-३२।

२ "हीनमन्यतमेनाप्यवयवेन न्यूनम्" इति गौतमसूत्र ५-२-१२।

३ अवशिष्टो ग्रन्थो न लभ्यते।

# शुद्धिपत्रकम् ।



| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| प्रद्युम्रसूरयो | प्रद्युम्नसूरयो | ५ | १७ |
| पुर्वाचार्यवत् | पूर्वाचार्यवत् | ,, | २६ |
| कुमुन्द्रचन्द्र | कुमुदचन्द्र | ६ | १८ |
| मपि | मीप | ,, | २६ |
| श्रीहेमचन्द्रचार्य | श्रीहेमचन्द्राचार्य | ७ | ३ |
| श्रीहेचन्द्राचार्य | श्रीहेमचन्द्राचार्य | ८ | २४ |
| उणादि | उणादि– | ८ | २६ |
| शुद्धमूपूर्ण | शुद्धमपूर्ण | १० | ११ |

---

| | | | |
|---|---|---|---|
| ( पुद्गल ) | ( पुद्गल ) | २ | २० |
| प्रामाणान्तरमुपासीन | प्रमाणान्तरमुपासीन | १४ | ३ |
| सस्यगर्थनिर्णय | सम्यगर्थनिर्णय | १६ | १४ |
| इदन्तया प्रतिभासो वेति | इदन्तया प्रतिभासो वेति | १७ | ८ |
| हृदि | हृदि | ११ | ११ |
| साहायकविरहात् | सहायकविरहात् | ,, | २१ |
| शद्वात् | शब्दात् | १८ | २० |
| मशद्वनम् | मशब्दनम् | १० | २२ |
| कुर्वाविणु | कुर्वाणेणु | २१ | १६ |
| स्वभावत–– | स्वभावाव– | २२ | २ |
| भार्गस | भागि | ,, | ३ |
| सम्भागे | सम्भोग | ,, | ८ |
| नाना परिणामा | नानापरिणामा | ,, | १६ |
| नाना परिणामा | नानापरिणामा | २३ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ऽनेकविध | ऽनेकविध– | " | १९ |
| रूपशब्दाना– | रूपशब्दाना– | " | २१ |
| परिमाणस्यापि | परिणामस्यापि | २६ | १६ |
| ' मतिश्रुतयो | ' मतिश्रुतयो | ३१ | २१ |
| नैयायिक– | नैयायिका | ३६ | १४ |
| सत्समसमी ५म | सन्समभपि | ३८ | ९ |
| पूर्वार्धम् | उत्तरार्धम् | " | २१ |
| १९ उत्तरार्धम | १८ पूर्वार्धम् | " | ०२ |
| उत्तरार्धम् | पूर्वार्धम् | " | २१ |
| नियम् | नीयम् | ४१ | २० |
| भेद कल्पना | भेदकल्पना | ४२ | २ |
| विशेषण विशेष्यभावो | विशेषणविशेष्यभावो | " | ४ |
| प्रतिनियमहेतुत्वाभावात् | प्रतिनियतहेतुत्वाभावात् | " | ६ |
| नीलानील | नीलानील | ४४ | १८ |
| भेदध्वनिका | भेदध्वनिना | ४४ | २४ |
| द्रव्यपर्यात्मक | द्रव्यपर्यायात्मक | ४० | ७ |
| नन्वैव | नन्वेव | ४६ | १० |
| व्यवस्थायाम् | व्यवस्थायाम् । | " | १४ |
| इतीदमखिल प्रमाण | इतीदमखिलप्रमाण | ४७ | ७ |
| विंक्षिते | विवक्षिते | " | ११ |
| यत्पदुत्तर | यत्पदुत्तर | " | १९ |
| प थीनी | पर्यीनि | ५० | १६ |
| " रोमशोदन्तुर | " रोमशो दन्तुर | ५२ | ११ |
| वृत्तिता " | वृत्तिता ' | ५४ | १३ |
| विषयवत्वमपि | विषयवत्वमपि | ५६ | १९ |
| लिङ्गीभवत्येव | लिङ्गी भवत्येव | ५७ | १७ |
| विपर्यासे | विपर्यासऽ- | " | १ |

| अशुद्धम | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ताद्विधा | तद्विधा | ६८ | १ |
| १–२–३ | १–१–१२ | ६२ | हेडिंग |
| सवादिन | सवादिन | ६२ | ११ |
| नित्यवे | नित्यत्वे | " | १५ |
| वाप्यभावेन | वाप्यभावेन | " | २२ |
| १–२–७ | १–२–१२ | ६३ | हेडिंग |
| व्यमिचारात् | व्यभिचारात् | ६३ | ५ |
| वाप्यदे | वाप्यादे | " | ६ |
| १–२–७ | १ २–१२ | ६४ | हेडिंग |
| च्छयनागना | च्छय | ६६ | १८ |
| स्वरचन प्रतीतयो | स्ववचनप्रतीतयो | ६७ | ४ |
| विशिष्ये | विशिष्टो | " | १७ |
| धर्मिता | धर्मिता | ६८ | १० |
| व्यायामपि | व्यामपि | ६८ | १५ |
| शद्वा | शब्दा | ६९ | ८ |
| शाब्दस्य | शब्दस्य | " | ९ |
| शद्वे | शब्दे | ७१ | २ |
| विभेदी | विभेदो | " | २३ |
| शद्वे | शब्दे | ७२ | ६ |
| यथाऽग्नि | यथाऽग्नि | " | १९ |
| धूमवत्त्वोपपत्ते | धूमवत्त्वोपपत्त | " | २० |
| धूमवत्वानुपपत्तेर्वा | धूमवत्वानुपपत्ते र्वा | " | १ |
| शद्वः | शब्द | ७४ | १७ |
| स्वशद्वेन | स्वशब्देन | " | १९ |
| तदुपपत्ति | तदुपपत्ति॰ | ७५ | २ |
| धर्मोपसहार | धर्मोपसहार | ७५ | ८ |
| पद्यते | पद्यन्ते | ७५ | ११ |

| अशुद्धम | शुद्धम् | पृष्ठं | पङ्क्तौ |
|---|---|---|---|
| त्यधिक | त्वधिको | " | १८ |
| यतश्री | यच्छ्री | ७६ | ९ |
| बदद्गन्ति | वृदद्गति | " | २४ |
| ददती | नद्दती | ७८ | २० |
| नुपपन्न | नवपत्र | ७९ | ५ |
| दब्द | शब्द | " | ६ |
| सत्वस्य | सत्वस्य | " | १२ |
| सर्वेनोत्पल | सर्वेनोपल | " | १५ |
| कचिपठा | कचित्पाठ | " | २४ |
| सिद्धावात्र | सिद्धा | ८० | २१ |
| सामान्यतत्वे | सामान्यतत्वे | ८१ | ८ |
| दिकार्य | दिकार्यं | " | २५ |
| प्रत्यभल्वा | प्रत्यभल्वा | ८२ | ९ |
| विपर्यय | निपर्यय | ८४ | ११ |
| नन्वनन्वयान्य | नन्वनन्वयान्य | " | २२ |
| लिङ्ग स्या | लिङ्गस्या | ८५ | ४ |
| यामुद्भासते | यामुद्भाव्यते | " | १० |
| ऽनित्य | ऽनित्य | ८९ | १७ |
| जातीनामान्य | जातीनामानन्त्य | " | २३ |
| मर्णाश्रमापाल्न | वर्णाश्रमपाल्न | ९१ | ११ |
| तत्वसरक्षणार्थ | तत्वसरक्षणार्थ | " | १६ |
| प्रयोजन | प्रयोजन | " | १८ |
| घोपपन्न | वोपपन्न | ९२ | ९ |
| नितण्डा निराक्रणेन | वितण्डानिराकरणेन | ९३ | ८ |
| सिद्धिर्जय | सिद्धिर्जेय | " | १२ |
| वादिन | वादिन | " | १६ |
| सनिग्रहो | स निग्रहो | " | २४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| श्रीपदकलङ्क | श्रीमदकलङ्क. | ” | २५ |
| विप्रतिपत्तिभेदा | विप्रतिपत्तिभेदाः | ९४ | २१ |
| व्यारयान | व्याख्यान | ९५ | १ |
| यत्रैन्द्रिक | यत्रैन्द्रियिक | ” | ७ |
| प्रसज्जयन् | प्रसञ्जयन् | ९५ | ८ |
| धर्म | धर्म | ” | १५ |
| वात्स्यायन भाष्ये | वात्स्यायनभाष्ये | ” | १७ |
| दृष्टमैन्द्रिकत्व | दृष्टमैन्द्रियकत्व | ” | १९ |
| यत्रैन्द्रियक | यत्रैन्द्रियक | ” | २० |
| ऐन्द्रियत्त्वादिति | ऐन्द्रियकत्वादिति | ” | २६ |
| धर्म | धम | ९६ | ३ |
| नोदिते । | नोदिते | ” | १० |
| स्वदृष्टाते | स्वदृष्टान्ते | ” | १६ |
| विरुद्धात्लक्षणो | विरुद्धतात्लक्षणो | ९७ | ६ |
| शब्द | शब्द' | ” | २० |
| कदन्त पदम् | कृदन्त पदम् । | ” | २१ |
| दितीयपक्षे | द्वितीयपक्षे | ९८ | ५ |
| स्वात्कृत | स्वात्कृत- | ” | १२ |
| लभ्यात् | लम्भात् | ९९ | १० |
| पदस्या पितत्स्यात् | पदस्यापि तत्स्यात् | ” | १९ |
| सागानामिति | समानमिति | १०० | ३ |
| प्रतिपत्तृणा | प्रतिपत्तॄणा | ” | ७ |
| स्व्यानस्योपलम्भात् | स्व्यानस्योपलम्भात् | ” | १४ |
| प्रतिगा हेतु | प्रतिज्ञाहेतु | ” | २२ |
| हानिमन्यतमे | हनिमन्यतमे | ” | २५ |
| स्दत्यतिरोदिति | रुदत्यतिरोदिति, | १०२ | १ |
| पुनरुत्तमुत्त । | पुनरुक्तमुक्त | ” | ६ |

| अशुद्धम् | शुद्धम | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मयत्नानान्त | प्रयत्ननान्त | " | १३ |
| हेतुमेवोच्चार्यं । | हेतुमेवोच्चार्य | " | १६ |
| दूषयितुम। | दूषयितुम | " | १९ |
| युत्नातरीयि | यत्नान्तरीयि | " | २१ |
| " | " | १०२ | २३ |
| कण्ठ | कण्ठ | १०३ | १० |
| दोप' | दोष | " | १७ |
| मात्वस्य | प्राप्तस्य | " | २६ |
| निम्रा | निम्रा— | १०४ | ४ |
| निम्रहार्इ | निम्रहार्इं | " | ७ |
| नात्यति | नादंति | " | ९ |
| सङ्का | सङ्को | " | १० |
| निग्रहस्थान | निम्रहस्थान | " | १३ |
| असाध | असाध— | " | २० |
| सिध्रि | सिद्धि | १०६ | २१ |
| निम्रहस्थान | निम्रहस्थान | १०८ | ८ |
| वैदः | वाद | " | १४ |